अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–५२

श्रीगुरुस्वयंभूनाथरामविरचिता

# शङ्करानन्दचम्पूः

(मातृकासंपादनम्)

सम्पादनम्

डॉ. सय्यद् सुभानि

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – ५२

श्रीगुरुस्वयंभूनाथरामविरचिता

# शङ्करानन्दचम्पूः

(मातृकासंपादनम्)

सम्पादनम्
डॉ. सय्यद् सुभानि

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं

न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — श्रीगुरुस्वयंभूनाथरामविरचिता
शङ्करानन्दचम्पूः

सम्पादनम् — डॉ. सय्यद् सुभानि

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — 240.00

आय.एस.बी.एन. — 9788183154307

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.
एवं
न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek                                        Prof. Srinivasa Varakhedi
10th January 2020                          Vice Chancellor, KKSU

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# **शङ्करानन्दचम्पूः**

संस्कृतवाङ्मये काव्यानां प्रमुखस्थानं वर्तते । काव्यं पद्यं गद्यं चम्पूरिति त्रिधा विभक्तम् । एतेषु चम्पूकाव्यानां वैशिष्ट्यं विद्वद्भिः गीयतेतराम् तेषु प्रकाशिताः सन्ति नलचम्पूः, रामायणचम्पूः, विश्वगुणादर्शचम्पूरित्यादीनि काव्यानि । परन्तु अप्रकाशिताः भिन्नलिपिषु विलिखिताः चम्पवः तत्र तत्र पाण्डुलिपिरूपेण सङ्ग्रहालयेषु उपलभ्यन्ते । तत्र गुरुस्वयम्भूनाथरामकविना विदुषा विरचित किरातार्जुनीयचम्पूकाव्यम् अतीव रमणीयतां प्राप्नोति । अस्याः हस्तलिखितप्रतयः मैसूरनगरप्राच्यानुसन्धानसंस्थायाम् (Mysore Oriental Research Institute, Mysore) एवं मद्रासस्थ सर्वकारीयपाण्डुलिपिसङ्ग्रहालये (The Govemment Oriental Manuscript Library, Chennai) चोपलभ्यन्ते।

**मातृकाविवरणम् -**

**मातृकाप्राप्तिस्थानं, लब्धविषयाः-**

**प्रथमं मैसूर-नगरस्थ प्रथममातृका -**

| | |
|---|---|
| १. मातृका उपलब्धिस्थानम् | -मैसूर्-नगरस्थ प्राच्यानुसन्धानसंस्था, मैसूर् |
| २. मातृकायाः सङ्ख्या | - P.३५२७ |
| ३. लिपिः | - ग्रन्थः |
| ४. लेखनसामग्री | - तालपत्रम् |
| ५. पृष्ठानि | - १४८ |
| ६. प्रतिपृष्टेपङ्क्तयः | -७ अथवा ८ |
| ७. प्रतिपङ्क्त्याम् अक्षराणि | - ६४ |

८. परिमाणम् -४१×३३

९. काव्यप्रणेता - गुरुस्वयम्भूनाथरामः

Beginning-

**श्रीकण्ठस्नेह सर्वस्वनिधिं लम्बोदरं भजे ।**
**शिखावतंसशीतांसुलेखाभिज्ञानचीटिकम् ।।**

Ending-

**पशुपतिरिति श्रुत्वा शिष्यद्वये xxxxxxx**
**कृतिमभिनवां गीतां द्वैपायनस्य तपोनिधेः ।**
**सदसि मुदितः सम्भाव्यैनं विनोदकलान्तरैः**
**अरमत चिरादात्मराम Xxxxx कन्यया ।।**

Colophon-

इति श्री गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दनाम्नि किरातार्जुनीये चम्पूकाव्ये
पञ्चमोच्छ्वासः।

**मैसूर-नगरस्था द्वितीयमातृका -**

१. मातृका उपलब्धिस्थानम् - मैसूर-नगरस्थ प्राच्यानुसन्धानसंस्था, मैसूर्

२. मातृकायाः सङ्ख्या -B.१०९७

३. लिपिः - देवनागरी

४. लेखनसामग्री - कर्गजपत्रम्

५. पृष्ठानि - १४७

६. प्रतिपृष्टेपङ्क्तयः - १४

७. प्रतिपक्त्याम् अक्षराणि - १८

८.परिमाणम् - १७४ २१

२. काव्यप्रणेता - गुरुस्वयम्भूनाथरामः

Beginning-

**श्रीकण्ठस्नेहसर्वस्वनिधिं लम्बोदरं भजे।**
**शिखावतंसशीतांसुलेखाभिज्ञानचीटिकम् ।।**

Ending-

**पशुपतिरिति श्रुत्वा शिष्यद्‌वये xxxxxxx**
**कृतिमभिनवां गीतां द्‌वैपायनस्य तपोनिधेः ।**
**सदसि मुदितः सम्भाव्यैनं विनोदकलान्तरैः**
**अरमत चिरादात्मराम xxxxx कन्यया ।।**

Colophon-

इति गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दनाम्नि किरातार्जुनीये चम्पूकाव्ये
पञ्चमोच्छ्वासः।

**मद्रास्-नगरस्था मातृका -**

| | |
|---|---|
| १. मातृका उपलब्धिस्थानम् | - मद्रस्-नगरस्थ सर्वकारीयपाण्डुलिपिसङ्ग्रहालयः, चेन्नै |
| २. मातृकायाः सङ्ख्या | - १२३७७ |
| ३. लिपिः | - देवनागरि |
| ४. लेखनसामग्री | - कर्गजपत्रम् |
| ५. पृष्ठानि | -२१४ |
| ६. प्रतिपृष्टेपङ्क्तयः | -१२ |
| ७. प्रतिपङ्क्त्याम् अक्षराणि | - १८ |
| ८. परिमाणम् | - ८३/८४६ ५/८ |
| ९. काव्यप्रणेता | - गुरुस्वयम्भूनाथरामः |

Beginning-

**श्रीकण्ठस्नेहसर्वस्वनिधिं लम्बोदरं भजे ।**
**शिखावतंसशीतांसुलेखाभिज्ञानचीटिकम् ।।**

Ending-

**पशुपतिरिति श्रुत्वा xxxxxxxx शिष्यद्वये**
**कृतिमभिनवां गीतां द्वैपायनस्य तपोनिधेः ।**
**सदसि मुदितः सम्भा व्यैनं विनोदकलान्तरैः**
**अरमत चिरादात्मराम xxxxx कन्यया ।।**

Colophon-

इति गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दचम्पूकाव्ये पञ्चमोच्छ्वासः।

**मातृकानिर्णयः -**

किरातार्जुनीयचम्पूकाव्यस्य मातृकात्रयं उपलब्धम्। तासु मातृकासु का वा प्राचीना ? का वा अर्वाचीना ? कामाधारीकृत्य काः काः मातृकाः समागताः इति प्रश्नः मातृकासंशोधनावसरे उदेति।

१. मातृकासु निर्दिष्ठानि कालनिर्णयपरवाक्यानि सङ्केताश्च आधारीकृत्य तासां पूर्वोत्तरत्वं ज्ञातुं शक्यते । अयमेकः पक्षः ।

२. ग्रन्थालये दत्तं विवरणमाधारीकृत्य कालनिर्णयः इति द्वितीयपक्षः।

३. मातृकायाः कीटदग्धतां कालशिथिलतां वा परिशील्य मातृकायाः प्राचीनत्वं निर्णेतुं शक्यते । अयं तृतीयपक्षः।

एवं मातृकाणां गुणदोषपरिशीलनविषयदृष्ट्या तासां वैषिष्ट्यं च परिशील्य प्राचीनत्वं सविमर्शं वर्णयितुं शक्यते । क्वचित् मातृकासु कीटदग्धासु सत्सु तद् विहाय इतरस्थलेष्वेव विचारः करणीयः ।

एतत्तु आन्तरिकमध्ययनं भवति । इदानीं बाह्याध्ययनं आश्रित्य मातृकापरिशीलनं क्रियते । मैसूरनगरस्थ मातृकाग्रन्थालये उपलब्धमातृका एका अतीवप्राचीना इति वक्तुं शक्यते कुत इति चेत् सा मातृका तालपत्ररूपेण स्थिता इति हेतोः। अन्यत् मातृकाद्वयं कर्गजपत्रेस्थितमितिद्म कारणात् तासाम् अपेक्षया मैसूर् नगरस्थ मातृका एव अतिप्राचीना | सा मातृका कीटदग्धा । अन्ये मातृके सम्पूर्णम्
उपलभ्येते। किन्तु तत्र तत्र अक्षराणि लुप्तानि । मातृकात्रयेऽपि कुत्रचित् स्थलेषु अक्षराणि लुप्तानि सन्ति।

**मातृकासम्पादम्**

ग्रन्थाध्ययने सम्पादनसरणिः मुख्यस्थानमावहति । ग्रन्थसम्पादनं हि मतिमतां प्रथत्नवतामपि कष्टसाध्यं कार्यम् भवति। तथापि यथाबुद्धि प्रबन्धोऽयं सम्पादितः । काव्यस्यास्य सम्पादनारीतिः दिङ्मात्रेण निरूप्यते।

प्रथमतः मैसूर नगरस्थमातृकासु एका मातृका My1 इति द्वितीया मातृका My2 इति संज्ञां संस्थाप्य अनन्तरं लिप्यन्तरं कृतवान् । My1. मातृका सम्पूर्णतया विद्यते, ग्रन्थलिप्यां तालपत्रे वर्तते इति हेतोः मूलमातृकारूपेण स्वीकृतम्। तदनन्तरं 'My1 मातृका, My2 मातृकया साकं तोलनं कृतवान्। अनन्तरं मद्रास्-नगरस्थां मातृकां लिप्यन्तरं कृत्वा मैसूर् मातृकया साकं तोलनम् अकारि। क्वचित् एकस्यां मातृकायां कीटकग्धस्थले अन्यस्यां मातृकायां उपलब्धपाठं स्थापितवान् । तत्र * एवं
चिह्नमपि स्थापितम्।

प्रायः मैसूर् नगरस्थमातृकाद्वयं समानतया दृश्यते । मद्रासस्थ मातृका एव किञ्चित् भिन्नं विद्यते। अतः

अधिकपाठभेदाः दृश्यन्ते एव । श्लोकेषु तत्र तत्र त्रुटयः सन्ति । त्रुटिस्थलेषु अन्वेषितपाठः स्थापितः ।

**ग्रन्थकर्तुः परिचयः -**

किरातार्जुनीयचम्पूकाव्यस्य प्रणेता भवति गुरुस्वयम्भूनाथरामः । शङ्करानन्दचम्पूकाव्ये पञ्च उच्छ्वासाः सन्ति। अस्य जन्मस्थलं तुण्डीरमण्डले "मूलाण्ड" नामकामहाग्रहारः। पितुः नाम स्वयम्भूगुरुरिति । कश्यपगोत्रे समुत्पन्नोऽयं कविः किरातार्जुनीयचम्पूः, कृष्णविलास इति काव्यद्वयं व्यरचयत् । अस्य कालः १७ शताब्दस्य पूर्वर्थः इति वक्तुं शक्यते। शैवमतानुयायिनः अस्य कवेः वंशानुक्रमः कृष्णविलासकाव्ये चतुर्दशसर्गान्ते उल्लिखितः वर्तते । तद्यथा-

**पुण्यश्लोकतमस्य तत्र भवतः पुत्रः स्वयम्भूगुरोः**
**दौहित्रः कवितानिरूढयशसः श्रीराजनाथस्य च।**
**रामः कृष्णविलासनाम कृतवान् काव्यं तदर्हन्त्वमी**
**सन्तः शोधयितुं समनितगुणग्राहा दुरूहाद्दते।।**[1]

[1] T.C.III.2825

ॐ श्री महागणपतये नमः

प्रथमोच्छवासः

श्रीकण्ठस्नेहसर्वस्वनिधिं लम्बोदरं भजे ।
शिखावतंसशीतांशुलेखाभिज्ञानचीटिकम् ।।१।।
पातु[1] गजेन्द्रो मेरुं फलमिति दूराद्ग्रहीतुमासीदन् ।
दिनरजनीद्योततमः शबलं 'दर[2]पक्वमिति पुनर्मुञ्चन् ।।२।।
गृह्णन् हरेः किरीटं गृध्नन्नयथा' [3]विधातुरुपवीतम् ।
गुरुसन्निधौ कुमारः करटिमुखभुकुटिवारितो"[4] जयति ।।३।।
जयति विवादः शिवयोश्चन्दनभसितैर्दुकूलचर्मपटैः ।
हारास्थिभिर्यथामतमादृतयोरात्मजावलङ्कर्तुम् ।।४।।
व्याघ्रपादपतञ्जल्योभक्तिवित्ताधमर्णताम् ।
एकापादिकयाद्यापि शंसन् संसन्नटो[5]'ऽवतात् ।।५।।
अनेकागमशाखौघसंघर्षे हरिवेधसोः।।
ज्योतिः स्फूर्जदमूलाग्रं [6]मोहान्ध्यमपहन्तु नः ।।६।।
मरकतलतागाढाश्लेषोचितं करुणाफल
प्रथिमविनमन्मौलिं प्राप्यं शिशोरपि पाणिना।
"[7]अधिगतवतामात्मच्छायां भवश्रमहारिणीं
द्रुहिणनगराकल्पं कल्पद्रुमं कमपि[8] स्तुमः ।।७।।

---

[1]GL पातुं

[2]GL दरपत्वमिति

[3] GL गृध्नन्नव्यथा

[4] GL वारिता

[5] GL संसारवत्

[6] GL मोहाध्य

[7] GL अधोगत

[8] GL द्रुममपि

विचलदलघुगङ्गावीचिकं चन्द्रचूडे
प्रणमति रतिकोपप्रार्थनाचाटुकारे।
पुनरुपगतकम्पापूरसंरम्भभीति-
र्द्रुततरपरिरम्भा पातु मां कामकोटी ।।८॥

स कालिदासो जयतादजागल
स्तनीभवद्भूतनगोस्तनीरसैः।
यदुक्तिमाधुर्यभरैस्तिरस्कृता
सितापि मध्ये परिगृह्यतेऽधिका।।९।।

सौरभ्यं परिमर्दजन्म वकुलस्रग्दाम्नि[1] न स्वादिमा
सम्पद्येत स एव माक्षिकसुधा द्राक्षासु नौ सौरभम्[2] ।
इत्थं व्यक्तगुणेषु वस्तुषु मनोहारी समस्तैर्गुणैः
सन्दर्भः पुनरस्तु सत्कविगिरां केन प्रतिच्छन्दवान् ।।१०।।

जायापतीमयी[3] सृष्टिर्दशता येन वेधसा[4] ।
ममापि वागर्थमयी सा स्यान्नारीनरात्मना ।।११।।

विश्ववाङ्मयविजृम्भयितारौ [5]प्रीणयामिपितरौ भुवनानाम्[6] ।
भारतीभिरसमग्रपादाभिर्बाहुलेय इव बाल्यदशायाम्[7] ।।१२।।

सुमेरुतृणतारोपे विद्यते यस्य वैभवम्।
लघीयसी च[8] मे वाणी गुरुकर्तुं स शक्नुयात् ।।१३।।

---

[1] 12 वकुलस्रग्दामनिः, GL वकुलस्रग्दाम्निना
[2] GL सारभम्
[3] GL जायापतिमयी
[4] GL वेधसे
[5] My2 वीणयामि
[6] GL भुवनानाम्
[7] My2 बालदशायाम्
[8] GL न्न 

अस्ति समस्तवस्तु[1] भुवनप्रशस्तमहिमा हिमालयभुवासविशेषभूषिताभोगोनभो[2]दाक्षायिणी[3] दयिता शृङ्गावलम्बितकादम्बिनीजम्बालपालीरपाटल[4] महोक्षाधिराजो नदीकूलङ्कषसुखासिता-लीलानुकूलः कैलासो नाम सानुमाली।

**आरुह्य यत्र हरवाहमहोक्षमोहात्**

**गण्डोपलं गगनवीथिषु नेतुकामः ।**

**आस्फालनोत्तरल हस्ततलः सहासं**

**आलोक्यते च चिरमम्बिकया कुमारः ।।१४।।**

**परिहासर[5] साद्गूढस्फाटिके यद्गुहागृहे[6] ।**

**नाथो[7] न ज्ञायते गौर्या कण्ठेकालो न चेदसौ।।१५।।**

**यत्र** दिव्यौषधिरसास्वादनदीर्घायुषो जर[8]श्चरेनचराश्चिरानुभूतं किरातभूमिकापरिग्रहमिदानींतन-मिव भगवतो[9] भवानीपतेः स्वजातिप्रकर्षनिदानमुदाहरन्ति ।

**कस्तूरीगर्भमञ्जूषासदृशं शशलाञ्छनम्।**

[10]**नीचोदयितुमीहन्ते यद्गुहान्तेषु किन्नराः ।।१६ ।।**

यस्य पुनरादर्शनिर्मलासु मेखलासु करावमर्शन मानसादिकासाराः, कूजितेन [1]कुशेशयासन-

---

[1] GL समस्तवस्तु भुवन

[2] GL भागो नभो

[3] GL दाक्षायण

[4] GL पाटर इव

[5] GL परीहासर

[6] GL यद्गुहाग्रहे

[7] My2 नालो

[8] GL जरद्वहने

[9] My2 भगवती

[10] GL नीचोदयतु

विमानहंसाः[2],द्वेषित[3]नकुलिशधरसैन्धवः,कालकन्धरककुदमानपि विज्ञायते कण्ठाभरणघण्ठारवैः।

[4]**अरत्नदृषदोयस्मिन्नकल्पलतिकालताः।**

**मृगाश्चागन्धभरिणा मृग्या रत्नमिवान्यतः** ।।१७।।

**शिखरगताः पश्यन्तः**

**सिन्धुमधो यस्य परिमिताभोगम्।**

**वानरतापसडिम्भा**

**हनुमदगस्त्यप्रथामुपेक्षन्ते ।।१८।।**

यस्य दुर्दान्तदशकन्धरदोर्यन्त्रगाढपीडन[5] गलितरसनिष्यन्द इव सन्दृश्यते परिसरगतमनु-कृतमुनिमानसं मानसं[6] नाम सरः ।

**दीनेन्दुचूडवसतिः शोभाभिश्शुभ्रचन्द्रिशः।**

**व्यनक्ति साक्षात्कैवल्यविभातं यः सनातनम् ।।१९।।**

**यद् गण्डशैलापरभागभाजो**

[7]**दृष्ट पुरस्तादिव कृष्णसारान्।**

**मुक्तेषु बाणेषु मुधा भवत्सु**

**निन्दन्ति [8]भिल्ला निजचापशिक्षाम् ।।२०।।**

**तस्य प्रशस्य विभवा शिवराजधानी**

**शीर्षेगिरेञ्जयति[1] शेखरमालिकेन[2] ।**

---

[1] GL कुशेशयास

[2] GL नसमानहंसाः

[3] GL हेषितेन

[4] GL अरत्नदृष्टदो

[5] GL र्यन्त्रगाठपीडन

[6] GL मुनिमालसं

[7] GL दृष्ट्वा निरस्ता

[8] GL मिल्ला

**[3]आश्रान्तमन्तरवदातगुणानुविध्दै**

**रामोदिभिः परिवृता सुमनः समूहैः[4] ।।२१।।**

यत्र परमानन्दस्रोतोमयं परिघावलयम्[5] ओंकारमयः प्राकारः प्रत्यग्ज्योतिर्मयाः प्रासादाः चतुर्वेदमयानि चतुष्पथानि पञ्चवर्णमयाश्चित्रालयाः।

**यद्वधूवदनाभिख्याप्रत्याख्यान भयादिव।**

**न जातु पूर्णतामेति नाथस्यापीडचन्द्रमाः ॥२२ ।।**

यत्र पुरहरफालानलज्वाला[6] प्लोषनिस्तुषीकृतानीव[7] गृहमेधिनां कर्मबीजानि न प्ररोहन्ति । तदवतंसशीतांशुरेखाङ्कुश-सङ्घट्टनावष्टब्धरभस इव न प्रवर्ततेदिवसनिशाकरमण्डल-घण्टाद्वयोल्लासविभा-वितयातायातः कालवेतण्डः। [8]तदीयकरतल-धृतविधि [9]कपालावलोकनविधूत दर्प[10] इव न प्रभवति भगवान्विधिः ।

**भासुरैः प्रहसितानि यद्गृहै**

**रासुराणि नगराण्यसूयया।**

**[11]प्लोषवैशसमहासत प्रभो**

**[1]रोषहासत इति प्रथा वृथा ।।२३।।**

---

[1] . GL गिरिर्जयति

[2] . GL मालिकेव

[3] GL आक्षान्त

[4] GL समूलैः

[5] GL परिघावल्यं

[6] GL प्लोषनिस्तुषो

[7] GL कृतानिव

[8] GL यदीयकर

[9] GL लघृतकविधि

[10] My2 दर्प्प

[11] GL प्लोषवैश

यत्र मदकरम्बितहेरम्बगर्जिताडम्बरतर्जितानीव दूरी भवन्ति दुरितानि | पाण्मातुर षण्मुखी[2] प्रणालीगलितशैवागमामृतधाराधौता[3] इव न दृश्यन्ते कामादयो हृदयकलङ्काः । विशृङ्खलविहरमाणशङ्कर-शाक्वर [4]"खुरपुटपाटिता[5] इव अधमा[6] विशीर्यन्ते । विश्वजननी[7] भवानीकटाक्षामृतनिर्वापितमिव निरास्पदतामापद्यते [8]तापत्रयम् । द्वैताद्वैते ब्रह्मणि यत्र मूकावादिनः स्वयं देवी देवोऽपि जयपराजयपणबन्धुरौ महर्षयः सभ्याः।

**ज्योतिर्मयंमणीहर्म्य [9]विभ्रमभ्रमितो विधुः ।**
**[10]ऐश्वर्यं लिङ्गमन्विष्यन् यत्र हंस इवादिमः ।।२४।।**

यत्र शिवापदानचित्रान्तर [11]निर्वर्णितेषु पुरत्रयप्लोष[12]हालाहलकबलनादिलीलायितेषु-विस्मयभयोदारम [13]दारुकावनतपोधनसधर्मिणीसंमोहने [14]सवैलक्ष्यम् दक्षाध्वरध्वंसने

---

[1] GL रोषहासत

[2] . GL, प्रणालसित My2 प्रणागर्पित

[3] GL याराधौता

[4] My2 खरपुट

[5] GL, पाटिता My2 वाटिता

[6] My2 इवाधर्म

[7] My2 विश्वजनीन

[8] My2 तपत्रयम्

[9] My2 विभ्रमौ

[10] My2 ऐश्वरं

[11] GL निविर्णितेषु

[12] GL, हालहल

[13] GL दारूकावन्न

[14] GL, My2 सवैलक्ष्यम्

सोत्साहम्कन्दर्प-दहने सवैक्लव्यम् अकलब्यम शोणारण्यतापसगृहाभ्यवहारे[1]करुणारसकरम्बितं भवति हृदयमम्बाया [2]

**मातामहीयमिति मे मणिहारदाम**
**पैतामहं किमिति पृच्छति बाहुलेये[3]।**
**आसूचयत्यवचनं हरभैक्ष्यपात्रं**
**यत्रेश्वरी[4] जनयति स्मितमीशवराय[5] ।।२५।।**

यत्र पुनरेकान्तनिर्मले निर्ममजनान्तरङ्ग इव चन्द्रकान्तमणिसौधान्तरे स्वच्छन्दविहारी गौरीसनाथः प्रमोदाश्रुभिरिव[6]निष्यन्दमानैः [7]सलिलशीकरैरनुमीयते भगवानमृतकरशकलशेखरः[8] ।

**प्राकाराग्रपदं पतङ्गहरितामश्रान्तरभ्रान्तिः[9]-**
**श्रान्तिविनोदे विश्रमगृहं पेयं च यत्रागतम् ।**
**[10]नेतुर्वातभुजां विषानलतृषानिर्वापिता वापिका**
**विस्तारोऽपि [11]विधेर्महीविरचनप्रस्तावना मात्रका ।।२६ ।।**
**अध्यास्त तन्नगरमात्मविभक्तयै[1] व**

---

[1] GL गृहाभ्यावहारे
[2] GL हृदयमम्बायाम्
[3] GL बहुलेये
[4] . GL यत्रेश्वरे
[5] My स्मितमीशवाराय
[6] GL दाक्षुभिरिव
[7] GL सलिलशिख
[8] GL शेखरम्
[9] GL भ्रान्तेर
[10] GL जेतुर्वातभुजां, My2 नेतुर्वातभुजां
[11] GL विधेर्महीविरचन

**शक्त्या गृहस्यसरणीमनुवर्तमानाम्[2]।**
**आराधितः परिकरैरणिमप्रधानैः[3]**
**स्वाधीनसिद्धिकुशलः[4] सुरसार्वभौमः ।।२७।।**
**अनाहतं यत्प्रतिहारवेत्रै**
**अवासितं यत्पदपांसुलेशैः।**
**यदङ्घ्रिपीठाग्रभुवाप्यघृष्टं[5]**
**न दृश्यते नाकसतां किरीटम् ।।२८ ।।**

यः पुनरनेक[6] शस्रोबलावलिप्तस्य[7] मकरकेतोर्वपुरसुरलोकस्येव पुरं निटाल चक्षुरुन्मीलनक्षणेन निजाङ्गरागतामनैषीत्।

कालानलज्वालाभयानकहा[8]लाहलमिवतजलन्धरासुरं कन्धरान्तरे सच्चक्रानुरोधेन निजग्राह । आलोलकरालकरवालदुर्दान्त[9] मन्धकं दन्तावलासरमिवलीलया दलयामास । नियमितनायासिकृतं वैवस्वतमिव पदातिमात्रवैभवादध्वंसयत दक्षाध्वरम्। यस्य फालानलोन्मेष लीलावसरभस्मिताशेष[10] जगतो न विस्मयपदमन्तक[11] स्मरजलन्धरादिनिर्गन्धनापदानानि ।

---

[1] My2 विभक्तये

[2] GL वर्तमाना

[3] GL रणिमप्रधानैः

[4] GL सिद्धकुशलः

[5] GL भुवाप्यधुष्टं

[6] GL, शनिब My2 शस्त्रीब

[7] GL, वलीस्तस्य

[8] GL भयानकहा

[9] GL दुर्दान्ति

[10] My2 स्मितारोष

[11] GL विस्मयपदमन्तका

**[1]आरालिको विधिर्येषां येषां[2] पौरोगवो हरिम् ।**
**तेषां विश्वपदार्थानां निधनं यस्य खेलनम्[3] ।।२९।।**

**माहात्म्येन पुरोधसः किमु विधेः पाणिग्रहश्रेयसा**
**देव्याः किं विभवेन वा हिमवतः शुध्दान्तवृध्दाशिषाम् ।**
**[4]ध्वंसन्ते विपदा करालगरलग्रासादयः[5] स्वामिनो**
**मुग्धानामिति यः [6]स्मितैर्विजयते गौरीसखीनां गिरः ॥३०॥**

**जन्यतया वात्सल्यं ममता लोकेषु पालनीयतया[7] ।**
**परिचिततयानुषङ्गो [8]भ्रश्यन्ति युगान्तवैभवे यस्य ।।३१।।**

**प्रलयाग्निशिखाचान्ते प्रशान्ते भुवनत्रये।**
**अङ्गरागस्रजौर्यस्य [9]संग्रहीतुमहो मनः।।३२।।**

यस्य [10]परमशेषवन्द्यताप्रमाणं पुराणवाचो भक्तजन [11]दिष्टान्तनिवारणदृष्टान्तः कृतान्तनियन्त्रणं कालातिलङ्घनलीलानिदर्शनं, विधिकपालरवलीधारणं [12]आद्यन्तशून्यतोदाहरणमपि भूदारहंसभूमिका-परिग्रहणं नारायणचतुराननयोः।

---

[1] GL आराधिको

[2] GL येवां

[3] GL स्वेदनम्

[4] GL, My2 ध्वंसत्वे

[5] GL ग्रासादयं

[6] GL जलयते

[7] GL,My2 पालनीयता

[8] GL भृश्यन्ति

[9] GL,My2 संग्रहीतुमटो

[10] GL परमशेषबन्धुता

[11] GL,My2 दिष्टान्त

[12] GL, My2 आद्यन्तानय

**अर्धहारिद्रमर्धं च यद्गात्रं भस्मपाण्डुरम्[1] ।**
**अर्धपक्वमिवाभाति फलं शृङ्गारशाखिनः ।।३३।।**
**देवः कदाचिदनुरुन्ध्य दिनादिकृत्यं**
**तत्र स्वयं वितरितापि तपः फलानाम्।**
**आस्थानमण्ट[2] पमिवापरमर्कबिम्बं**
**शैलादिपाणिमवलम्व्य शनैरयासीत् ।।३४।।**

तत्र च समस्तजगदनुग्राहिणी, साक्षात्पृथगवस्थिता शक्तिर्दाक्षायणीसहव्याह[3]रणभव्या स्वाहेव हव्यवाहं, समुल्लसितसभाजना दक्षिणेव [4]सप्ततन्तुं, संयो[5]जनानुगुणा स्मृतिरिव वेदार्थम्, अत्यर्थपावनालोक[6] वितीर्णपदमार्क[7] रविकासशोभा प्रभेव भास्वन्तमन्वयासीत्[8]।

तदनु देवे देव्या [9]सहास्थानमण्टपमासीदिति[10] सावित्रि ! कुतः[11] प्रस्थितासि[12],समुत्तम्भय शातकुम्भातपत्रम्, गायत्रि ! संचालय वालव्यजनम्,गङ्गे ! [13]गृहण भृङ्गरमङ्गीकुरु

---

[1] GL, My2 पाण्डरम्

[2] GL मण्डप

[3] GL, My2 व्याकरणं

[4] GL सत्पतन्तु

[5] . GL संपोजन

[6] GL विकीर्ण

[7] My2 पद्माकरस्ये

[8] GL भगवन्तम

[9] GL सभा

[10] GL मासीदति

[11] GL कृतः

[12] GL प्रस्थितास

[13] . GL गृहाण

करङ्गमाम्नायदेवते धारय मणिपादुकां धर्मसंहिते सरस्वति ! सत्वरमावेदयवेत्रहस्ताः विस्तारय कमले [1]मुक्तावितान-मित्येवमभ्यन्तरपरिचारिकाणां ससम्भ्रमावाचोजिजृम्भिरे। तदानीमेव दध्वानबहि-र्द्वावितर्दिकाध्यासिनां देवानां सेवावसरमावेदयन्ती गम्भीरमभिज्ञानकाहली । आसीने च तस्मिन्नवसरवेदिना शैलादिना सरभसमन्तः प्रवेशिताः शतमखचतुर्मुखशार्ङ्गीयुधपूर्वाः सुपर्वाणः सर्वेऽपि सनकसनन्दन-सनत्कुमारनारदपराशरव्यासप्रभृतयोर प्रभृतयोऽपिमहामुनयः प्रसन्नगम्भीरया तदीयया दृष्ट्या परमनुगृहीता यथार्हमुपतस्थिरे।

**अशेषविद्यादिगुरोरमुष्य**
**सप्रश्रयं सन्निधिमेत्य सर्वे ।**
**प्रज्ञानुकूलं परिशीलितानि**
**विज्ञानतन्त्राणि[2] तदा विवव्रुः[3] ।।३५।।**

कतिचिदप्रतिकीर्णवर्णस्वरपदक्रमचतुरं चतुरो वेदानुदाहरन्। केचिदाचक्षिरे पञ्चलक्षणानि पुराणानि अन्ये पुनर्दर्शयन्वाचोयुक्तिम् । केचन कीर्तयामासुरवाङ्मान[4] सगोचरनिर्मलज्ञानज्योति-रुद्भासनप्रशस्यमागमानाम् । अपरे जगुरसुरपुरसूदनादिः लीलाविचित्राणि नानाचरित्राणि |

**तदा विनोदाय भवो भवान्याः[5]**
**सभाजनानां च सभाजनाय।**

---

[1] GL मुत्तत्र

[2] GL मन्त्राणि

[3] My2 विवद्रुः

[4] GL सुखाङ्गला

[5] GL भवन्या

**सस्मारमायां निजरूपदीप**

**च्छायां त्रिलोकी[1] परशिल्पकारी ।।३६ ।।**

तत्क्षणमेव देवदेवस्य भाववेदिनी सिध्दयोगिनी भूमिकामादाय पुरो बभूव । [2]भुवन प्रपञ्चवञ्चनमहेन्द्रजालपिच्छि[3]कापर पुरुषवशीकरणपुण्याङ्गनाप्रकृतिनिर्मल-प्रत्यग्ज्योतिरादर्शप्रच्छद-पटीस्वच्छन्दपरमानन्दशुभ्ररोचिरप्ररेखिका चतुर्युगचक्रडोलागर्भपरिभ्रामितब्रह्माण्डमण्डला भगवती माया । देवदेव ! भवत्पादमूलोपजीविनी [4]परिचारिकेयमागता, [5]अनुगृहाण मामाज्ञादानादिति विज्ञापितवती। अनन्तररमन्तर्हासविकसितं कपोलमवलोकयति लोकयति देव्यामुखमिन्दुशेखरे भगवति मेनागृहमेधिनो[6] मेदिनीधरादम्बायाजननाभिनयमारभ्य समुद्भावय तारकासुरविजयावधि[7] कुमारोदयचरितमिति । तदीयभिप्राय-वेदीशैलादिरवादीत्। सा पुनः स्वामिनो यथादिष्टमन्वतिष्ठत्।

**शृङ्गाघातनिपातितामिव दिवो मन्दाकिनीं धारयन्**

**भ्रश्यद्वालभराभिशाङ्किचमरीनिर्वर्णितस्रोतसम् ।**

**[8]अध्यासीनकुरङ्गनाभिसुरभि[9]र्विद्याधरप्रेयसी**

**सुंभुक्तोरुगृहागृहः स हिमवानांलक्ष्मिवस्मिन्क्षणे ।।३७ ।।**

---

[1] त्रिलोका

[2] GL बहन

[3] GL पिच्छिक

[4] . GL परिचारिकेव

[5] GL, My2 ग्रहाण

[6] My2 मेथिनो

[7] . GL विजयाव

[8] GL अध्यासेन

[9] GL विद्याधार

लक्ष्यमाणे च तस्मिन् उदकाष्ठि [1]चण्डीरथकण्ठीरवेण गृहागृहमधिशयितुम्[2] , गृहवाहन-मयूरेणमन्दारतरूशिखरमारोढुं[3], शंकरपाणिसारङ्गेणशर्करिलां कर्कशस्थ लीमध्यासितुम्, एकदन्तेनपुनरङ्कपर्यङ्कमुपगन्तुम्*[4] , परिणतुमधीत्य कोपानतेषु हैमवत्या परङ्गपालीमुपकर्तुं किंबहुना [5]अम्बिपतिनापि[6] गुरुगौरवेण सरभसमभ्युत्थातुम्, तदनु धरणीधरप्र*[7]णिहितायां मेनायामुपनिषदीव शान्तिरुत्पाद्यमाना क्रमेण चापलाबहुलयाशैशवलीलया सवित्रीजनमायासवित्री[8] प्रत्यभासत सकलजगतामपिसनातनी जगज्जननी।

अथ तदानीं -

**आयासयति किमम्बामखिलेप्येवं शिशुत्वचेष्टाभिः ।**
**इतिगृहसात्कृतगिरा शिखयोरघटन्त[9] सस्मितापाङ्गा ।।३८।।**

ततः क्षीणपुण्यमिव शैशवमतिक्रामन्तींपर्यन्तभुवितपस्यन्तमीश्वरं गुरुवचसा[10] वरिवस्यन्ती प्रत्यदृश्यत हैमवती तारकासुरपरिभूतस्य पुरुहूतस्य निदेशेन[11] स्थाण्वाश्रमं [1]प्राविशति प्रसूनधन्वापि[2] ।।

---

[1] GL चण्डीसस्थि
[2] GL मधिरायितुम्
[3] GL मारोदम्
[4] *GL
[5] GL अम्बिकाय
[6] GL यतिनाय
[7] GL, My2 रिणी
[8] GL सायित्री
[9] GL घरन्त
[10] GL गुरुपचसा
[11] GL निदेशे

**मलयनिलयवाताधूतचूतप्रवालो**

**वकुलमुकुलवल्गभृङ्गझङ्कारचारुः ।**

**मधुरमधुरसेनो[3] निद्रकेलिपालि**

**[4]स्तदनुतदनुरोधान्माधवः प्रादुरासीत् ।।३९ ।।**

प्रणिधानविरते भगवति नीललोहिते वसन्तोपहृतानि कुसुमानि प्रणत्य [5]विचिकिरन्ती देवी [6]पञ्चायुधचापयष्टिरपि युगपदुपलक्षिते ।

**तस्मिन्क्षणे तदनुभूतिविमुग्ध चेताः**

**क्रीडाम्बुजं शिवपदे गिरिजा क्षिपन्ती[7]।**

**मायाविलासमनुचिन्त्य ततो ममार्ज**

**सव्याजमत्र सुरशेखरमाल्यमूलीम् ।।४०।।**

तदनु धैर्यविपर्यासनकुपितेन शम्भुना ससंरम्भकम्पितोत्त-माङ्गप्रेस्रोलित

गङगाशी[8]करपरिषिच्यमाने भृकुटीदर्भपुलिका[1]परिष्कृते[2] फालफलकहोमकुण्डनिलये[3] प्रलयसमयहोतव्यसकलजगद्वेधसि[4]

---

[1] GL प्राविशत्

[2] My2 धन्वाणि

[3] GL सेन्निद

[4] GL स्तदनत

[5] GL विकिरन्ति

[6] GL देवीष्ट

[7] GL क्षिपन्तो

[8] GL सीकर

जातवेधसि[5] सामिधेनी[6] भावमनीयत[7] किल रतिपरिणीम्[8] । अवसरे च तस्मिन्ननुस्मृत्य पुष्पायुधप्लोषणनिस्त्रंशतांमनागिव [9]विमनायमानां विनमितवदनां पदनखाञ्चलेन भद्रासनपीठमालिखन्तीं[10] प्रसादयन्[11] दयितां प्रमथप्रतिरिति बभाषे।

**मायाविलसितमेतन्मानिनि**
**[12]विमनायसे किमनिदानम्।**
**अथवा [13]जलीकृतोऽस्म्यह**
**मङ्कुरितस्मरशतैस्तवापाङ्गैः ।।४१।।**

.अपरमिदमवधारयतु[14] देवी-

**पञ्चायुधे[15] तव समक्षगतेऽपि दृष्टिं**
**संचारयन्नसरलां स पुराहमन्यः ।**
**आराधनावसरमद्यतवानुपश्यन्**
**अन्यो जनोऽयमनुरागरहस्य वेदी।।४२।।**

---

[1] GL पुलिक
[2] GL परिस्मृते
[3] GL होमकुण्डनिलया
[4] GL देधसि
[5] GL वेदासि My2 वेदासी
[6] GL सामधेनि .
[7] GL, भावमधीयत My2 भावमनियत
[8] GL परिणीताः
[9] GL, विमानाय
[10] GL लिखन्तीः
[11] GL प्रसादयः
[12] GL विमनायस
[13] GL जडी
[14] GL दधातु
[15] GL तवा 

अथ तपस्समाधिमत्यां हैमवत्यां वर्णिवर्णिकया निर्धार्यभावस्थैर्यमोषप्रस्थं प्रति प्रास्थापयन् सप्तर्षीन् प्रसेदिवान्देवो दद्दशे । तदानीं भवानीमपवार्यसखी सलीलमभाणीत् । अयि सखि ! कच्चिदनुस्मरसि

**कामोन्मादकथां विना वरयितुः सप्तर्षिभिर्याचितुं**
**प्रख्यातं चरितं त्रपानतमुखी [1]पाश्र्वे पितुः शृण्वती।**
**सात्वं धर्मजलाप्लुतां सपुलकां गण्डस्थली बिभ्रती**
**[2]तत्प्रेमाङ्कुरपलिकामिव तदा [3]दृष्टालिभिः सस्मितम् ।।४३।।**

सा चानुस्मरणमाहस्म सखीम्।

**एते संबन्धिनः पूर्वैपितुरित्येव गौरवात्।**
**आर्यानद्यापि सप्तर्षीन् पश्याम्यामरुन्धतीम् ।।४४ ।।**

तदनु गौर्या सह [4]पर्यायतं संवरणमालारो[5]पणलीलामनभवन् भगवान्प्रत्यभासात्।

**अथाह देवि विजयामहो मायाविचेष्टितम्।**
**[6]प्रवृत्त इव भूयोऽपि सविवाहमहोत्सवः ।।४५।।**

तदनु सख्याः [7]सौभाग्यातिशयं प्रख्यापयन्ती विजया व्याजहार -

**प्रतिग्रहीतुं तव पाणिदाम [8]ननाम यत्कामजितोपि मूर्धा[9]** |
**सोभूदभविष्यत्प्रणयापराधसान्त्वानतीनां प्रथमावतारः[1]** ||**४६।।**

---

[1] GL पाश्र्वं

[2] GL, तत्प्रमा My2 तत्पेमाङ्क

[3] GL, दृष्वा

[4] GL पर्यायतः

[5] GL, माकारोपण

[6] GL, प्रवृत्य

[7] GL सौभाग्यातियं

[8] GL नमाम

[9] GL

वैवाहिकवेदिदृषदि वृषाङ्केण तव [2]पादारोहणविनमदमरविलासिनीचूडामणिषु परिक्रमणोल्ला[3] सानां प्रथमाभ्यास:[4] पर्यणंसीत ।

**पत्युर्न विग्रहमदक्षिणमाप्नुहीति[5],**

**दत्ताशिषः परिणये तव वंशवृध्दाः ।**

**तस्यैव विग्रहमदक्षिणमाप्नुवत्या**

**प्रेम्णा त्वया ननु मुधा वचसः क्रियन्ते।।४७।।**

[6]अनुस्मर्तव्यमपरमिदं देव्या ।

**मनसि प्रथमाङ्कुरितो मदनो न व्यञ्जितस्त्रपाकुञ्जात्।**

**हरदृष्टिदोषमस्मिन्ननुचिन्त्य पुनस्त्वयेवमुहृयन्त्या[7] ।। ४८ ।।**

तदानीं देव[8]* देवोऽपि जगाद मदनब्रह्मानुभवसब्रह्मचारिणी सहचारिणीम् ।

**आत्मानमन्यमचलेन्द्रकृतोपचार**

**मन्यां त्रपाभगवती भवतीं नवोढाम् ।**

***[9]रागादलक्षितनिशादिनसंविभागा**

**न्यन्यानि तान्यपि सुखान्यधुना स्मरामि ।।४९ ।।**

इतोऽपि [10]मायासमक्षीकृतान्यावयोर्विस्रम्भसा क्षिणो[1]तानि रमणीयस्थानानि पश्यतु देवी।

---

[1] GL वतारम्

[2] GL, पदारोपण

[3] GL परिक्रमणोल्लासं

[4] GL प्रथमाभ्यासं

[5] GL

[6] GL

[7] GL पुनस्त्वेयोवमुहृयमन्त्या

[8] GL

[9] GL

[10] GL मामाएमक्षी

**एतद्यूतविनोदधाम तदिदं सा चित्रशालामणी**

**डोलाविभ्रमशालिकेयमपि सासैवेयमा[2] ।**
**क्रीडापर्वतकः स एष तदिदं केलीसरस्तद्रह-**
**श्शय्यामन्दिरमेतदेव तदिदं ज्योत्स्नाविहाराजिरम् । ।५० ।।**

अथ क्रमेण ह[3]व्यवाहशिखादिव्यवाहिनीन्यां [4]धात्रीभ्यामिव हस्तानुहस्तिकया सञ्चारितमापूरीतशरवणोत्सङ्गमतिवत्सलया कृत्तिकया[5] संविद्धितमवष्टम्भितदृष्टिसरमजृम्भत किमपि त्रैयम्बकं तेजः ।

तदानीमविनीतैरेतैरन्यतः साङ्क्रामितमैश्वरं वीर्यमिति विचार्य[6] कोपारुणोगौ[7]रीमुखे भूयोऽपि शापाकुलेषु[8] सुपर्वकुलेषु सपदि कुमारस्य कौमारचरिताभिनन्दी नन्दी जगाद ।

**मृष्टि शैशव एव येन जघटे शक्त्या [9]युधासञ्जनात्**
**शत्रूणां [10]मकुटाक्रमेण पदयोः साधीयसी लोलता।**
**दीनालोकजिघृक्षतापि सफला तेषां प्रतापग्रहा**
**दन्येवाभवदस्य[11] शैशवदशा वीरव्रतालङ्कृता ।।५१।।**

---

[1] GL क्षीणो तानि रमणीय
[2] GL सासैनेयमा
[3] GL हव्यावह
[4] GL यात्रीभ्यामिव
[5] GL
[6] GL विद्धार्य
[7] GL कोपारूणोगौ
[8] GL शापाविलेषु
[9] GL, युधात्सञ्जनात्
[10] . GL मकुटो
[11] GL भाववदस्य. 

**वह्नौ वारिण्यपि शरवणे [1]वक्रवैरूप्यदोषात्**

**क्षिप्तं मात्रा[2]तदनु सदयं वर्धितं कृत्तिकाभिः ।**

**बालं देवाः [3]शरणयत किं वेति दैत्योऽट्टहास**

**व्याप्तं[4] यावद्धटयति मुखं चिच्छिदे तावदेषः ।।५२।।**

**दैत्यावलेपमनुचिन्त्य [5]तदात्वसिध्द**

**मातामृदृष्टिरयमङ्कगतः कुमारः।**

**पश्येति पाणिकनकाम्बुजघट्टनेन**

**मायाविमोहितमबोधयदीराममम्बा । ।५३।।**

तदनु विलोकजनलोचनवञ्चनीं विद्यामञ्जसा प्रतिसञ्जहार माया सिध्दयोगिनी ।।

**इति गुरुस्वयंभूनाथरामकृतौ शङ्करानन्दनाम्नि चम्पूकाव्ये प्रथमोच्छवासः।**

---

[1] GL वक्तृ

[2] GL वदनु

[3] GL शरणागत

[4] GL व्याक्तं

[5] GL तदारत्व

## द्वितीयोच्छ्वासः

**प्रज्ञापथं प्रथयता हरता तमांसि**
**पद्माश्रियं विकिरता परितो दिगन्तान् ।**
**शंसन्नटेशचरणेन तवारुणेन**
**जागर्तु चेतसि [1]चिरं मम सुप्रभातम् ।।१।।**

अथ प्रतिसंहृतायां च तस्यां परिसरचित्रभित्तिलिखितासु समाप्तिदृष्टासु परममाहेश्वरस्य पाण्डुसूनोरपदानगाधासु धृतिमाबबन्ध चन्द्रशेखरस्य कुमारचरितावेक्षणनिवृत्तं चक्षुः । तत्रान्तरे तपोधनपरिषदिनातिविप्रकृष्टंविष्टरमधितिष्ठन् स्रष्टा मुनिरष्टादशपुराणानां किरातार्जुनीयं काव्यमभिव्यञ्जयितु-मयमेवावसर इति ससम्भ्रमम् अभिर्षिगायकाभ्यां सह मन्त्रयामास । अथमन्त्रयमाण एव तस्मिन् आलेख्यपरावृत्तदृष्टिराविष्कृत-कौतूहलप्रीतिरखिलजगदन्तर्यामी[2] किमन्तेवासिभ्यां मन्त्रितमावेदयेति वेदव्यासं [3]सोत्प्रासमप्राक्षीत् । ततः स्वामिनः स्वयमनुयोगानुग्रहलब्धावसरोबध्दाञ्जलिरजसा निजासनादुत्थाय सत्यवतीतनयोः विनयोपचारपुरस्सरं विज्ञापितवान्। देवदेव ! भवत्पादमूले कदापि श्रावितैव मया भारतं नाम कृतिः।

**उध्दृत्य रत्नमुदधाविव तत्र सारं**
**सन्दृब्धमादिशबरस्य तवापदानम्।**
**गीते निवेशितमिदं मुनिगायकाभ्या**
**मस्मान्कृतार्थय कदाप्यवधानदानात् ।।२।।**

---

[1] My2 परं

[2] GL जगदन्तर्यामी

[3] GL सेत्प्राशमप्राक्षीत्

इत्येवमावेदयति तस्मिन् कौतूहलानुबन्धिन्यां भवान्यां भवतु गीयतामिति भगवानादिदेश | तदानीमवसरोचितमवोचत नन्दी -

**श्रोता विश्वगुरुः स्वयं कवयिता सुव्यक्तवेदत्रयः**
**कर्मन्दी शबरार्जुनीयचरितं काव्यं च कर्णामृतम् ।**
**गातारौ चतुराविमौ किमपरं माहेश्वराधिष्ठिता**
**गोष्ठीतत्वविभाव[1] नी महदिदं कौतूहलस्यास्पदम् ।।३।।**

अथ यथोचितमाचार्यादनुज्ञामवाप्य कल्पद्रुमदुकूलनिचोलय-वनिकाक्षेपपूर्वं कल्पितोत्सङ्गरङ्गावतरणां वीणां प्रवीणामिव नटीं पुरोधाय पुरशासनप्रसादाय तदन्तेवासिनौ व्यासोपक्रमं काव्यं क्रमेण गातुमुपाक्रमेताम्।

**अव्यादनादिशबरस्तपसोऽपि तीव्रा**
**द्वीरव्रते विहितसंमतिरर्जुनस्य।**
**सोऽयं यदावहत जातु तपः प्रसाद**
**चिह्नं मुखे शिरसि सन्ततमेतदंकम् ।।४।।**

अथ कदाचिदनितरसाधारणप्रणयमाधुर्यैः सोदर्यैः सधर्मिण्या [2]याज्ञसेन्योऽपि शश्वदमुक्तपार्श्वतया चरणचतुष्टयावष्टम्भ-सुप्रतिष्ठितस्य श्रध्दासनाथस्य [3]भगवतो धर्मस्यानुकुर्वन् सर्वंकषतया नियत्या परित्याजितराजभोगो[4] लोकोत्तरगुणपक्षपाति-भिर्द्विजातिभिः[5] सह संवादविहितसुखाद्वैतं द्वैतवनमधितिष्ठन्

---

[1] GL

[2] GL याज्ञसेन्यापि

[3] GL भगक्तो

[4] GL राज्यभोगो

[5] GL पातिर्भिर्द्विजातिभिः

युधिष्ठिरो विज्ञाय ज्ञातिकुलप्रवृत्तिं प्रतिनिवृत्ताद्वैज्ञानकात् प्रणिधेः सुयोधनस्य राज्ञः प्र[1]जारञ्जनोपज्ञं प्रशस्तिमश्रौषीत्।

**आतङ्ककालिमकलङ्कित [2]माननेन्दुं**
**आलोक्य तत्र समये द्रुपदात्मजायाः[3] ।**
**[4]उद्धूतरङ्ग [5]मुपबृंहि [6]तरोषसिन्धु**
**रब्रूत भूपतिमभिन्नधृतिं[7] स भीमः ।।५।।**

**विद्वेषिणो नयविशेषविदोऽपि वीरा**
**[8]नस्माननीतिकुशलानबलीयसोऽपि।**
**[9]क्षत्रक्रियाकमलिनीरजनीकर श्रीः**
**क्षान्तिः कथं न विदधाति गरीयसी नः ||६||**

आर्य विचार्य[10] *तामशेषस्यापि[11] जन्तोः समरविमर्दशाणोत्तेजितशौर्यमणिरेव प्रशंसाकारणम्।

**कान्तारभूमिषु[12] मृगाः कति वा न सन्ति**
**शार्दूलकुञ्जरमुखा ननु तेषु धन्याः ।**
**उत्कर्षमुत्तरपदाभरणानि भूत्वा**
**पुंसो यदाहुरभिधानपदानि तेषाम् | ७ ||**

---

[1] GL
[2] GL कलाङ्कित
[3] GL दुपदात्मजायाः
[4] My2
[5] GL तरङ्गजुप
[6] GL बर्हित
[7] GL भिन्नमतिं
[8] GL
[9] GL क्षत्रिय
[10] *GL
[11] GL मशोषस्यापि
[12] GL भूरिव

**मन्त्रबुध्दिस्तथा शत्रुविपत्तिरपि मानिनाम्।**
**व्यवसायनयोपा[1] यविनियोगोपदेशिनी।।८।।**

किमिति पश्यन्नपि न पश्यसि कृपणारण्यकगृही[2]णीसामान्यमवस्थान्तरमरूंतुदविमतनिकार-शल्यानुवेधदुस्सहं पाञ्चाल्याः। इयमिदानीमरण्यानीविहारेषु लताकण्टकलग्नां [3]शुकाचक्रायुधं शरणमाक्रोशन्ती[4] ससम्भ्रमोपग[5] तानस्मानन्नुस्मारयन्ती दुर्योधनसदसि [6]तूष्णीकतां कदुष्णश्वासबहुल[7] वलो"*[8]कते। अस्याः पुनरनुपचारशिथिलपर्याकुलं[9] चमर्या इव सहचर्या वालपाशमाकीर्णकीचकारण्यहठग्रहादेमो*[10] चयितुं प्रवर्तमानः पाणिरस्माकमपत्रपते।

**सङ्ग्रामसन्दितसमाह्व[11]तराजसिंहः**
**सामान्यवीर इव सम्प्रतिकाननेषु[12] ।**
**हत्वा मृगानुपहरन्नयमामिषार्थं**
**पार्थोऽपि किं न भवतो[13] भवति [14]त्रपायै ।।९।।**
**सम्पत्तिवृध्दिरपि नः सहनीयः पक्षे*[1]**

---

[1] GL योपय
[2] * My2
[3] GL
[4] GL माक्रोशन्तो
[5] GL हुतानस्मान
[6] GL तूष्णीकृतां
[7] GL बटुल
[8] *.GL
[9] GL पर्यावलं
[10] * GL
[11] GL समाव्रत
[12] * GL
[13] GL भवती
[14] GL त्रयायै

*[2]भातृव्यदुर्विनय एव न चेन्निदानम्।
शौर्यं [3]महारथविमर्दसहिष्णु नो चेत्
गोत्रे न चेन्महति जन्म कुरूद्वहनाम्*[4] ॥१०।।
स्याच्चेत्सङ्गरलङ्घनेन लघिमा मय्येव निर्दिश्यतां
यूयं पश्यत साक्षिणः परममी युध्दे मम क्रीडितम् ।
*[5]कृष्णाकेशनिपीतशेषमसकृदुश्शासनास्रासवम्
पीत्वा पातयतो[6] गदां मदवशात् प्रत्यर्थिसेनामुखे।।११।।
विरोधि*[7] नोविशसितुमादिशाधुना
मुनिव्रतं विपदि मुधा दधासि किम्।
निवर्तये विधिमपथप्रवर्तिनम्[8]
[9]निराकृताङ्कुशमिव नागमुन्मदम् ।।१२।।
*"[10]तवशासनमेव दुर्विलङ्घयं
विधिरस्माकमलध्य[11] विक्रमाणाम्।
दिवसानि यतो दिशन्विषादं
व्यवसायेन *[12]सुखं भुनक्तु भूयः ।।१३।।
कृष्णाकेशनिबन्धाय गान्धारेयमृगीदृशाम्।
[1]कैशिकस्रंसनायापि क्रमतां धाम तावकम् ।।१४।।

---

[1] *GL
[2] *GL
[3] GL महारथसहिष्णु
[4] *GL
[5] *GL
[6] GL पातयता
[7] * My2
[8] GL प्रवतिनाम्
[9] GL निराकृता
[10] *GL
[11] GL मालध्य
[12] * GL

अनन्तरमधिगत *[2]योगतन्त्रो नरेन्द्रः प्रत्यवस्कन्दिजनजिग्रसि[3]षाव्यग्रस्य काकोदरस्येव वृकोदरस्य गिरायता[4] शीतनिखासपरुषं रोषं निनायायुक्तम्*[5] ।

**संविल्लङ्घनतो न कोऽपि लघिमा क्रोधं [6]समारुन्धय**
**स्वाच्छन्द्येन स एव सम्मुखयितुं शक्तः पराञ्चं विधिम्***[7] |

**लौल्यं वा निजगौरवेण सहजं लक्ष्म्या [8]नियन्तुं क्षमा[9]**
**क्षान्त्या हन्त भवानियन्ति दिवसान्यायासमासादितः ।।१५।।**

"[10]*अथवानाथवा[11]नमर्षेण किं करोतु भवान्।

**बहूनि वचस्यपि मूका बधिरा श्रवणेऽपि शृण्वति भवन्ति ।**
**जाग्रति नयनेऽप्यन्धाः जाल्मतया शेषकलुषिताः[12] पुरुषाः ।।१६।।**

वत्स! "[13]मात्सर्यतिमिरतिरोहितविवेकविलोचनः[14] पृथग्जन इव कथंकारं नीतिमार्गादपक्रामसि[15] ।।

**कामार्थौ कस्य [1]मोहान्धौ मज्जयेतां न मानसम्।**

---

[1] GL संसनायापि
[2] * GL
[3] GL जिग्रसी
[4] GL गिरायुता
[5] *GL
[6] GL समरुन्धय
[7] *GL
[8] GL नियन्तिं
[9] GL क्षमः
[10] *GL
[11] GL नाथवनमर्षण
[12] GL कलुषिगाः
[13] GL मात्समत्सर्य
[14] GL विलोपनः
[15] GL क्रामति

**तनोति केवलं धीरस्तावभौ धर्मसाधने ।।१७।।**

**विधिः [2]पुराकर्मविपक्तिमाणि[3]**

**व्यनक्ति सर्वत्र शुभाशुभानि।**

**आरोप्य तस्मिन्नपि कर्तृभावं**

**तुष्यत्यहो [4]रुष्यति चाल्पमेधः ||१८||**

**लब्धास्पदः प्रकृतिरञ्जयिता सपत्नः**

**शक्यो न जेतुमिति ताम्यसि तन्न किंचित्।**

**उल्लङ्घयन् स्वयमुपाधिकृतानुरोधान्[5]**

**[6]उर्वीभृतो सदुपजापसहान् स कुर्यात् । ।१९ ।।**

**इतीरिते धर्मभुवा गभीरं**

**नमन्मुखः क्ष्मां विलिखन्नखाग्रैः।**

**तस्थौ स भूयोऽपि भुजङ्गलोकं**

**प्रवेष्टुकामस्त्रपयेव भीमः[7] ।।२०।।**

**तदा विधिरिव व्यासः प्रादुरासीत्प्रसेदिवान् ।**

**तेषां चिकीर्षन्नुत्कर्षं द्विषन्निष्कर्षणक्षमम् ।।२१।।**

अथैते [8]निगृहीतेन्द्रियशक्ति[9] संवर्धितं पितरमिव समाधिमाराधयन्तं [1]मातरमेव सत्यवतीवाचमनुवर्तमानमुत्पाद्य[2]

---

[1] GL मोहार्थो

[2] GL पुरकर्म

[3] GL विपकिमाणि

[4] GL लक्ष्यति

[5] GL कृतानुरोधः

[6] GL दुर्वीभूतो

[7] . My2 भूः

[8] GL निगृहते

[9] GL शमिसंवर्धित

तेजः परमाणुभिरुत्कीर्णमिवतपनकरतूलि[3]काभिरोजायमान-मालोकपथावतीर्णजनकल्मषोन्मार्जनकूर्चशलाका[4]भिरनेकागमशाखा जटाभिर्जटाभिरुद्भासमानं, वेद-त्रयविभजनवैचित्री[5]मिव विद्योतयता भस्मत्रिपुण्ड्रेणपवित्रीकृतफालफलकमाम्नायत्र[6] यसमेतामष्टादशपुराणसङ्ग्रहकारिकामिव यथाकालमृषिकुलाचारप्रतिबोधनाय दक्षिणश्रवसि-निवेशितामक्षबीजवलयैकविंशतिमावहन्तमग्रतोनिर्गत्वरिनभिरध्रिन खमयूखरेखाभिस्तीर्थोदकधाराभिरिवपुनानमागमनमार्गमुपलालितशुकमुद्यानं,विद्यालतानामुपनतमुक्तोल्लासमुद्भवक्षेत्रमनुपर्वमधुरभारतकथासारपुण्ड्रेक्षुणामन्तः सेवितहंसं कासारमाम्नायसारसोन्मेषस्य मृगाङ्कमिवाषाढ[7] मृगकृत्तिकापरिकरालङ्कारोज्वलं वैश्वानरमिव विश्रुतारण्याश्रयं मध्यन्दिनतपनमिवमहातपस्थिति-साधनवपुषमवृषविद्वेषणं हृषीकेशम् अनध्वरध्वंसिनं कृत्तिवासम्[8] अराजसगुणोत्तरं[9] चतुराननमधिष्ठातारमष्टादशपुराणद्वीपचक्रस्य विवेक्तारं वेदानां निबन्धारमुपनिषत्सूत्रस्य संविधातारं धर्मसंहितानां शिवतातिमागतं शुकतातमातिथेयीभिरर्हणाभियथार्हमुपतस्थिरे।

**द्वीपायन*[10] मिवाम्भोधिमग्नान्द्वैपायनो मुनिः ।**

---

[1] GL मेतारामेव

[2] GL वर्तमानमत्पाद्य

[3] GL कुतूलिका

[4] GL शलीका

[5] GL वैचित्रि

[6] GL माम्नायत

[7] GL मिवषाढं

[8] GL कृत्तिवासं

[9] My2 सगुणत्तरं

[10] *GL

**उदशिश्वदसद्वृत्तदायादायासितानिमान्[1] ।।२२।।**

अथ कथाप्रसङ्गानुपदमावेदितागम[2] प्रयोजनात्तपोधनादधि चकार [3]विनयधनो धनञ्जयः।

**सपत्नजनजित्वरीं तपस्याधनसहकृत्तरीं विद्याम्**
**तस्मै योगिवरः स योगमखिलं [4]दाश्वानथास्त्रावली।**
**[5]सध्रीचावहितेन[6] वत्स भवतोपास्या तपस्यापरा**
**शक्राराधनसाधनस्य विधये तस्याश्च * [7]योग्यन्नगम् ।।२३।।**

त्वां नेष्यत्ययमेव [8]गृह्यक् इति व्याहृत्य चान्तर्दधे[9] ।
**तस्मिन्नन्तर्हिते यक्षस्तत्क्षणादेव सन्यधात्।**
**पूषणि प्रोषिते सायं पूर्णिमा चन्द्रमा इव ।।२४।।**

तत्रान्तरे दुर्दान्तनृपतिसंवर्तकालरात्रिं दुर्गामिवरुधिरोपहारार्थिनीं प्रत्यर्थिमथनबद्धव्रता[10] मप्यसंयतां[11] केशसन्ततिमावहन्ती[12] प्रयाणव्यवसायिनं [13]सव्यसाचिनमवोचत समयोचितं पाञ्चाली।

---

[1] GL दायासिता
[2] GL वेदि तानुगमन
[3] GL विनयधना
[4] GL दाखानथा
[5] GL सद्धोचा
[6] GL वटितेन
[7] *GL
[8] GL गृह्यक
[9] GL वाचन्दधे
[10] GL बवृता
[11] GL संरायं
[12] GL मावहन्ति
[13] GL सव्यसाचि

**[1]भ्रातृभिरेवोपपन्नः प्रथितै-**

**मैत्र्यादिचित्तसंस्कारैः।**

**[2]मास्मार्षीरस्माकं मयैव[3]**

**चान्वासितस्तपस्सिध्या ।।२५।।**

किं बहुना मानिनीति मे माननीयता मनस्विन इति यशस्विता भवतामायतिष्टस्तव हस्ते परम्।

**तथा त्वया विधातव्यं यथा व्यासानुशासनम्।**

**अप्रमत्तजनास्वाद्यमहदाज्ञा[4]लताफलम् ।।२६ ।।**

अथ विधिवदाराधितजातवेधसा पुरोधसा धौम्येन[5] सम्यगभ्यर्चिता[6]भिरर्चनाकुसुमपरि-परिभ्रमद्भ्रमरवाचालतयाजयाशिषमिव दाशुषीभिः[7] प्रसेदुषिभिरस्त्रदेवताभिरभिनन्द्यमानगमनश्चर-माङ्गरक्षाकृतेसंपाद्यमानावन्याविव भुजौ पार्श्वद्वयकृतानुषङ्गेण[8]वैनतेय इव विजयसहकृत्वानौ पक्षौ सबहुमानमवेक्षमाणः कथञ्चन कार्यावधारण नियमितविरहकातर्यैः सोदर्यैः सहचर्यापि यथोपचारं प्रस्थापितः

---

[1] GL रिवोपपन्नः

[2] GL मास्मार्षि

[3] GL मयेव

[4] GL स्वाधर्महदाज्ञा

[5] GL सौम्यग

[6] GL म्यर्चित

[7] GL दासुषीभिः

[8] My2 कृतानुषङ्गोण

[1]प्रातीपिकजननिकारनिर्यातनाभिमानी हिमानीमुक्त इव मरीचिमाली [2]प्रचीचमानरोचिरुदीचीमभिजगाम सव्यसाची ।

**उत्तराशोन्मुखं व्यासोपदेशमिव गृह्यकम् ।**

**[3]अशोभतानुगामीसम्यग् [4]*यशोभर इवार्जुनः । ।२७।।**

तत्क्षणमध्वन्यत पर्जन्यधीरमशेषभुवनाभयघोषणायमानैराहतैरानकैः। अनुपदममभिनन्द्यैव [5]तदीयं [6]निनदमाननेषु दिशामाविरासीत् प्रसादलक्ष्मीः। आनन्दविकसितमुखीभिरास्वा- सितासुरभिशीतलसुकुमारैः श्वसनैरुदश्वसं [7]दिवदुरीश्वरपरिगहक्लेशिनी विश्वम्भरा। अनार्यचर्याधनस्य दुर्योधनस्यापि दोरन्तरपञ्जरदुरासिकायासं कथंचिद्विधूयसहेलं चलितुमिच्छन्त्या राजलक्ष्म्यास्तदीयकेयूरमकरिकाकोटिलग्नसंव्या[8]मोचनव्यतिकरेण वलितमिवानुक्षणमदक्षिणं[9] पुस्फोटभुजशिखरम्। अशङ्कितमेव ताटङ्कम् आपपात पादान्तिके पर्यस्तनिस्तुलस्थूलमुक्ता[10]फलबाष्पशीकरनिकरं भविष्यदत्याहितवेदानायैव भानुमत्याः।

---

[1] My2 प्रातोपिक

[2] GL प्रयोचमान

[3] GL अशोभवानु

[4] *GL

[5] GL तदीय

[6] GL निनदमानेषु

[7] GL नैरुदश्वसी

[8] GL सख्यान

[9] GL मिवालक्षणं

[10] GL स्फुलमुक्ता

**छायातरून् प्रतिपथं मधुरावदात[1]**
**तोयाः प्रकाश्यसरितो मरुतोऽनुकूलान्[2] ।**
**आराधनावसरमस्य चिराय लेभे**
**नारायणप्रियसखस्य नरस्य धात्री।।२८।।**
**अनेन ददृशे क्रमादथ हिमालयः सानुमान्**
**उमाजनयिता सतामुपशमश्रियामाश्रयः ।**
**तुषारकृतपुष्पवद्व्यावविधिरोषधिज्योतिषां**
**प्रवृत्तिपरिवृत्तिभिः परमुपात्तनक्तन्दिवः ।।२९ ।।**
**प्रभवति यतः पवित्रां गङ्गा**
**गौरी गुरुत्वकीर्तिरपि।**
**[3]वियदवरोहारोही[4] वैल-**
**क्षिण्याय केवलन्त्वनयोः ||३०||**

यस्य घनतुहिनशीकरनिकरघर्मजलवर्मितावयवतया प्रचु[5]*रमुखपवनफूत्कारतयाशिखर-भुजकृत [6]परिभ्रमणशिशिरकरमण्डलतालवृततयापि[7] निरतिशयवैशाल्यसमुन्नत्त्या[8] प*[9]र्याप्तेजगति [10]दुरासिकायासोऽव[1]सीयते।।

---

[1] GL पहात
[2] GL कूल्या
[3] GL वियदवि
[4] My2 रोदारोहो
[5] *GL
[6] My2 भुजकृति
[7] GL वृत्तयापि
[8] GL समुन्नत्य
[9] *GL
[10] .GL दुरासिका

लाक्षारुणाङ्घ्रिरेखा लक्ष्या
लक्ष्यासितारुणाश्मपथे।
[2]हरद्ररतनुपदपकजच[3]मरीणां
यत्र भवति[4] सन्दिग्धा ।।३१।।

ऐरावतस्य धृतदन्तविलेखनाङ्का
[5]वीरायिताक्षरविनिर्मितपट्टिकेव।
आलोच्यते किल गणैरलिमागधा[6]* नां
दानाञ्जनप्रणयिनीतटभूर्यदीया[7] ||३२||

तमासाद्य हिमासारा शीतालुः शीतमन्यवः ।
तत्रर्षीन् पञ्चतपसः[8] समेने सुकरव्रतान् । ।३३।।

त्रैलोक्यसारैकनिधेर्हिमाद्रेः
आलोक्य सौभाग्यमनन्यलभ्यम्।
[9]आबद्धकौतूहलमिन्द्रसूनु
मारब्ध[10] वक्तुं धनदानुयायी।।३४।।

---

[1] GL सोऽवसीधते
[2] GL हरवदतनु
[3] GL अरीणां
[4] GL भवती
[5] GL वीराधिता
[6] *GL
[7] GL तटभूर्यदिया
[8] GL तपस्य
[9] GL आब्ध
[10] GL रारब्ध

अयमिदानीमनुशिखरमाविष्करोति
[1]वैमानिकीनामाननानुबिम्बसङ्कुलान्विलासमुकुरानिव
पद्माकरान्मकरध्वजध्वजिनीनिवेशमिव[2]
[3]सुरवेशयौवत[4]मवतरदमरदीर्घिका[5]गतानुगतिकं
[6]बालापत्यामिवनन्दनस्य च हरिचन्दनं वनम् ।

**गुह्यकाधिपकुमारिकाः सखी गण्डपत्रमकरीचिकीर्षया[7]।**
**[8]हस्तलेखफलकं कलानिधेस्रभागमपरं वितन्वते ||३५||**

किञ्च-

**आसज्यापरमङ्गमायतदृशां [9]तुङ्गस्तनापाश्रये**
**[10]विन्यस्याङ्कतले मनोहरकलव्याहारिणी[11] वल्लकीं।**
**गायन्तः सुखमीलितार्थनयनागङ्गाजलार्द्रास्वमी**
**विश्राम्यन्ति [12]तटान्तचन्दनलतावीथीषु विद्याधराः ।।३६ ।।**
**दिवः पृथिव्यां प्रथमावतारे**
**[13]दुर्वारमस्याः सरितः प्रवाहम्।**

---

[1] GL वैमानिकि
[2] GL ध्वनिनिवेग
[3] GL सुखेशयौत
[4] GL मतरदन
[5] GL घटिका
[6] GL, My2 बाल्यापत्य
[7] GL करोचिकीर्षधा
[8] GL हस्तखेल
[9] GL तूङ्गन
[10] GL विनस्याङ्ग
[11] GL हाराणी
[12] GL कदान्तचन्दन
[13] GL दुर्वाहमस्या:

**उभौ प्रगल्भौ शिरसा गृहीतु-**
**मुमागुरुः सोऽयमुमापतिर्वा[1] ।।३७ ।।**
**स्थावरेण वपुषास्य हि गङ्गा**
**जङ्गमेन जनिता जगदम्बा[2]।**
**[3]तद्वयं भुवनपावनमीशः**
**सेवते शिरसि चार्धशरीरे।।३८ ।।**

**मार्गे स्वाङ्घ्रिनिवेशशोधिततले[4] वामं पदं निक्षिपन्**
**वामेनैव तरोः स्वहस्तनमितात्पुष्पं करेणाहरन् ।**
**भागैः स्वस्य [5]पुरपरीक्ष्यमृदुतां चर्मास्तरे [6]संदिशन्,**
**अन्यार्थेन महेश्वरोऽद्य[7] विहरत्यङ्गे वहन् प्रेयसीम् ।।३९।।**

आः ! कथमिदानीमासन्न एव कमनीयतपनीय[8] शिखरोपनीतसुमेरुशोभाविशेषसौभाग्यः पक्षच्छेदावसरसंगृहीत-सकलमहीध[9]रंसर्वस्वसारपरमाणुना[10] निर्वर्तित इव गोत्रभिदासन्तत-सर्वर्तु-सान्निध्यनिष्पन्नफलपुष्पजातिरखिल-पादपालवालयथा-कालवारिसेकाधिकारिजलदसन्ततिरिन्द्रकीलोऽयमालक्ष्यते।

---

[1] GL पतिर्ना
[2] GL जगदञ्चा
[3] GL तद्वयं
[4] GL शोधिकतले
[5] GL स्वस्थ
[6] GL तंदिशन्
[7] GL महेश्वरोत्र
[8] GL तपनीयं
[9] GL महीपर
[10] GL माणुनः

**परिसरपरिवाहिजाह्नवीकाः**

**फलितलतातरवो विवर्तरम्या[1] ।**

**परमुपनमयन्त्यमी प्रदेशाः**

**परिणतिमत्र[2] तपः समाधिदोग्ध्रीम् ।।४०।।**

**तत्तन्निध्यायतस्तत्र चित्रं यक्षेण दर्शितम् ।**

**मनोजवसतामैच्छन् मनस्साहस्रलोचने[3] ।।४१।।**

तत्र च [4]पवित्ररमणीये कुत्रचित् प्रदेशे धनेशानुचरं विसृज्य [5]विरज्यमानमानसः सपत्नजनदुर्वारैभ्यन्तर[6]परिचारैरिव सर्वायुधैः परितः सरीसपैरिवचन्दनश्चिरन्तनो मुनिः पुरन्दराराधनाय दुश्चरं तपश्चरितुमारेभे।

**इति गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दनाम्नि चम्पूकाव्ये किरातार्जुनीये द्वितीयोच्छवासः।।**

---

[1] GL विवक्तरम्याः

[2] GL परिणतिमृत

[3] GL सुलोचने

[4] GL पवित्रमणीये

[5] My2 परिज्य

[6] GL दुपरिभ्यन्त

## तृतीयोऽच्छ्वासः

**[1]किरन्तीसिन्दूरद्रवमिव [2]दिगन्ते पशुपते**
**समिन्धेन स्वान्ते चरणमहसां ते गुणनिका ।**
**द्विजैः काले काले विधिवदुपनीतामनितर**
**प्रतिग्राह्यां दातुं प्रणतिमिव सन्ध्याभ्युपगता[3] ।।१।।**
**वनसखबालप्रियमृगदययेव [4]दधे मुदं गुडाकेशः।**
**त्रिषवणतीर्थजलैरिव कचजितशैवलकदर्थितैर्जनिताम् ।।२।।**

अकाण्डखाण्डवप्लोषकातराणामरण्यपादपानां भयमिव[5] निगृहीतुं वल्कलोकप्रहारं पर्यग्रहीत्[6] । प्रणिधानकृतसन्निधानस्य भगवतः [7]सहस्राक्षस्य चक्षुः [8]परामर्शमाशङ्कमान इव धनञ्जयः प्रथममेव[9] मैत्र्यादिमनः [10]प्रणिधानशोधिनीभिरधिहृदयसरोजं राजोराजिमुन्ममार्ज अदसीयहृदयविहायसि भगवतः पर्जन्यस्य सन्निधानमावेदयन्नविरलजृम्भितपुलकमानन्द-बाष्पाम्भसामासौरः[11]*प्रससार। तस्य

---

[1] GL किरन्तो
[2] GL दृगन्ते
[3] GL सन्ध्यामुपगता
[4] GL दधेजडाङ्
[5] GL भयमीव
[6] GL पर्यगृहात्
[7] My2 सहाराक्षस्य
[8] My2 पामर्श
[9] GL प्रथममैव
[10] GL प्रसाधन
[11] My2 

तपस्याविशेष[1]निकष[2]समुत्तेजितचित्तरत्नस्य सर्वात्मैकतानुभूत्यै बभूवुरनुकूलचरितानि भूतानि।।

**सिस्नासति प्रववृते सहसैव [3]पाथो**
**वह्निर्जुहूषतिशिशस्विति साभ्रमभ्रम् ।**
**किंचित्क्लमस्पृशि किरीटिनि तत्र वायुः**
**आमोदवानपि सुषुप्सति शाङ्कला भूः ।।३।।**
**तदनु विधुरिताः तपः प्रभावैः**
**परिमितकालपचेलिमैस्तदीयैः।**
**जगदुरिति[4] जगद्विगाह्य दिव्यं**
**वलमथनाय वनेचरा [5]विनीताः ।।४।।**

भगवन् भवत्पदातिपरमाणूननूगृहाण किंचिदवधानदानेन । सम्प्रति [6]तपसो विधात्रा गात्राणि तेजः परमाणुभिरेव निर्माय तदवशेषसंभारमिव सम्पिण्डितनिहितं[7] शिरसि जटामण्डलमुद्वहन् परिगृहीतसर्वायुधतया प्रकृतिदुर्वारस्य षडरिवर्गस्य निग्रहाय सन्नध्द इव साक्षादुपलक्ष्यमाणो महानुभावतया तपोवन[8] मृगाणामिव वीरशान्तयोः शाश्वतिकं विरोधमपनयन् यौवनस्यापि विनयमिव [9]लक्षयन् पावनरमणीयतया महेश्वरव्यतिक्रमानुशयगृहीतव्रत इव

---

[1] GL दशेष
[2] GL निकर्ष
[3] GL पोथो
[4] GL जगदुरित
[5] GL वनीताः
[6] GL तपप्रोविधातृ
[7] GL निहितः
[8] GL तपो वा
[9] GL शिक्षयन्

मकरकेतुः मूलस्तम्भ इव धर्मनगरारम्भस्य पुष्पोद्‌गम इव [1]पुष्पद्रुमस्य प्ररोह इव पुरुषकारस्येन्द्रकीलाभिधे देवस्य लीलाशिखरिणि कोऽपि तपस्तपस्यति जिगीषाध्यवसायी पुरुषः। अत्र भवतेवानेनापि नाथवानयं सानुमाली न यथापुरं दधाति निश्शङ्कसुखसेव्यताम्। [2]अतस्तस्य तपस्समाधिभङ्गभयेन दरीगृहेषु विरमति विद्‌याधरीणां वीणावादगोष्ठी, विश्राम्यति दिक्पालविलासिनीनां तपनीयाशोकवनेषु [3]दोहलक्रीडाकलकलः विरली भवति कदलीवनेषु किन्नराधिराजदारिकाणां शारिकालापनलीलाव्यसनम्। न प्रवर्तते च पर्यन्तवनदेवतानां वसन्तलतासु डोलाखेलनम् श्रुत्वा देवः [4]प्रणामति विहितप्रणामाविरराम परिषदारण्यकानाम्।

**वाचं निशम्येति वनेचराणां**

**व्यचीकसल्लोचनबृन्दमिन्द्रः।**

**पयोदनादानुपदं प्रमोदात्**

**बर्हिनटिष्यन्निव बर्हभारम् ।।५।।**

अनन्तरमभिनन्दितागमनमिव ससम्भ्रमचलितावतंसपारिजातमञ्जरीचञ्चरीकमुखरेण "[5]कर्णयुगलेनाभ्युद्‌गम्यमानमिवाविष्कृतमन्दस्मिताघ्र्यपुष्पपहारेण मुखारविन्देनान्तर्दीयमानावकाश-मिव बहिर्निर्गमितपुलकाङ्कुरैरङ्गैरङ्गजतपोमहिमावृत्तान्तनिशमन[6]

---

[1] GL पुण्यद्रुमस्य

[2] GL पुण्यद्रुमस्य

[3] My2 दोहद

[4] GL प्रमाणमिति

[5] GL कण्टयुगले

[6] GL शिशमन

कन्दलितमान[1] न्दंसापदेशमपह्नुवानास्य तपस्स्थैर्यमन्तर्यामितया जानन्नपि विशिष्य विज्ञातुकामः सुत्रामा कुत्रापि पार्श्वभागे मङ्गल[2]प्रदीपिकास्विव[3]
पङ्क्तिशोऽवस्थितासुकरघटितसेवा[4]ञ्जलिपुटासु
सुरलोकवारमुख्यासु[5] सन्नध्दपल्लवमुकुलासु वनलतासु वसन्त इव मधुकरमालिकां चिक्षेप कटाक्षलेखाम्। तत्क्षणमेव कटाक्षरश्मिभिराकृष्येव
सम्मुखीकृतामलक्तरसपौनरुक्तिमाविष्कुर्वता पादप्रभावितानेन पट्टांशुकपरिस्तीर्णमिवास्थान[6]कुट्टिममातन्वतीं[7]पद्मव्यूहभङ्गाभियु
क्तपददव्न्दवां [8]निषङ्गानुकारिजङ्घायुगा-
मनङ्गविजयमङ्गलारम्भकनकरम्भास्तम्भसुभगम्भावुकोरुकाण्डां मदनमनोरथप्रवृर्तकन नितम्बचक्रेण रागराज्यमेकचक्रं रचयन्तीं नितम्बकुचभारतारतम्यनिर्धारणतुलाशलाकामिव नीलगुणानुविध्दां रोमावलींमध्ये दधानां सुरतव्याकरणसूत्रस्येव सूक्ष्मनिरूपणीयस्य [9]विलग्नदेशस्य वृत्तिमिव विस्तारिणीं स्तनदव्यीमुद्वहन्तीं सुरभिनिश्वासपटवासवासितस्य दन्तवाससः प्रसर्पता[10] पाटलिम्ना निर्ममहृदयमिवनिर्मलं नासामणिमनुरञ्जयन्तीं

---

[1] My2 कन्दलितामानन्दं

[2] GL प्रप्रदीपिका

[3] GL दीपिकास्वेव

[4] GL सेप्यञ्जलि

[5] GL मुखासु

[6] GL मिवस्तीन

[7] GL पद्यव्यूह

[8] GL पददव्न्दवा

[9] GL वलग्न

[10] GL पाटलिम्ना 

आयतिस्पर्धालुविलोचनद्वन्द्वसङ्घर्षनिवारणाय शम्बरारिणा मध्यकलितेनैव नासावंशेन भासमानां [1]विलासपत्ररे[2]खाव्यजितपञ्चेषुयशः [3]प्रशस्तिलेखं कपोलफलकमाबिभ्रतीं [4]अभ्यर्णकर्णपूरपरिभ्रमद्भ्रमराभिपातिना कटाक्षेण चटुलहृदयशरव्यभेदमिव शिक्षमाणां चपलचक्षुश्शक[5] रविवर्तनचमत्कारतरलयोर्लला-टलावण्यनदी[6]बालशैवालमञ्जर्योरिव [7]चिल्लीलतयोरुल्लासेन पुरतः स्थितमि[8]वपुष्पेषुवीरमादिशन्ती बन्दीकृतकर्मन्दिविवेकालोक-सन्दिग्धसीमन्तसिन्दूरसामन्तसम्भृतमोहान्धकारपरमाणुसम्भारेणे वकेशभ रेण शोभमानां सपद्मेनेव[9] चरणाभ्यां सावर्तेनेव[10] नाभिमुद्रया सचक्रवाकमिथुनेनेव[11] स्तनाभ्यां सबालमृणालेनेव भुजयुगलेन सकोकनदेने[12]वाधरप्रभया सनीलोत्पलेनेव कटाक्षविक्षेपैः सशैवालकलिकेनेवकेशपाशैः सर्वतः प्रसर्पता सुषुमास्रोतसानिजमसरोभावं विभावयन्ती [13]प्रतिभटमण्डलाग्रं

---

[1] GL सलास

[2] GL पुत्ररेखया

[3] GL यशप्रशस्ति

[4] GL अभ्रर्ण

[5] GL चक्षुश्शफर

[6] GL लावण्यवदी

[7] GL चिल्लोल

[8] GL पुजेषु

[9] GL सपदमेनैव

[10] GL सावर्तेनैव

[11] GL मिथुनेव

[12] GL नदेनेव

[13] GL प्रतिफल

पतितैरेवपरिष्वजनीयपयोधरा-मण्डलाग्रं[1] सोमपीथीभिरेव सुलभमुखसोमपानां चिरसेविततपस्साधनशिखरिनितम्बैरेव सेवितव्यनितम्बांनिर्निमेषनयनैरेव निरीक्षणीयरामणीयकां सुधारसिकैरेव सुबोधाधरमाधुर्यामविपर्यासमधिष्ठानमिव [2]तारुण्यस्य दिष्टवृद्धिमिव दृष्टीनां सिद्धविद्यामिव शृङ्गारस्य समृध्दिमिव सौभाग्यस्य सिध्दिमिव तृतीयपुरुषार्थस्य [3]पर्याप्तिमिवस्रीसर्गस्य वरप्राप्तिमिव वैदग्ध्यस्य समष्टिमिव सौन्दर्यस्य निखिलकलाकलापनिकषदृषदमप्सरः परिषदं दिविषदां पतिरवादीत् ।

**उभयीभिरेव लक्ष्मीरुपन-**
**मति विशिष्य नाकलोकस्य।**
**कामफलदायिनीभिः कल्पल-**
**ताभिस्तथैव भवतीभिः ।।६।।**

विषमशरविजयाभिज्ञानवैजयन्तीनामिव [4]कनकगिरिकरी[5]न्द्रोपरिजयन्तीनां भवतीनाम् आसेचनकसौन्दर्यनिध्यानावधितपोविधिध्यानमतिमनोहरसल्लापश्रुतिलीलावधिरशेषश्रुतिविषेषाभ्यां सविलासहासावधिरितिहासानुषङ्गः जृङ्गारतरङ्गिपाङ्गदर्शनावधि दीर्घदर्शिनमपि दर्शनालोचनम् ।

**सौन्दर्यकन्दलसुधापरिवाहभाजा-**
**[6]मासेचनेन परमप्सरसाममी वः ।**
**दुर्वारतीव्रनियमज्वरदूय[1]माना**

---

[1] GL सोमवीथी

[2] GL तारुव्यस्य

[3] GL कर्याप्ति

[4] GL कनकशिरि

[5] GL करोन्द्रो

[6] GL वासेचेनन

**निर्वापयन्ति मुनयोऽपि निजं शरीरम् । ७ ।।**

**लटयन्ति लोचनं यदि रविनि-**

**हितं दिवि चरीषु भवतीषु।**

**पश्यन्ति पञ्चतपसो नक्त-**

**मपि [2]व्यक्तलाञ्छनं सूर्यम् ।।८।।**

अद्य तावदस्मदवनीधरे प्राकृतजनविस्मयनीयमहिमा तापसः कोऽपि तपस्यतीति भवतीभिरप्याकर्णितमेव ।

**सन्दिग्धदन्तपटलं घनचापलेन**

**मन्दस्मितेन[3] मधुसारकिरा[4] गिराः[5] वः।**

**भ्रूविभ्रमेण[6] पुनरक्षिचमत्कृतैर्वा**

**तद्वञ्चनाधिकृतये तनुतोपयोगम् ।।९।।**

[7]अनेकरसभङ्ग्यभङ्गुरापाङ्गतरङ्गावेगा[8]विपर्यासितवीतरागधैर्याभिः [9]सुकरमेव भवतीभिः समाधिगतस्यापि विषयरसास्वादिनो जनस्य मनस्संवननम् विद्रावितचन्द्र कान्तशिलाभिरिन्दुकर-कन्दलीभिरिन्दीवरपुट[10]विघ्नमीषत्करम्[11] । इत्येताः प्रसादामृत

[1] GL, My2 ज्वरदीय

[2] GL व्यक्तालाञ्छनं

[3] GL मन्दस्मितस्य

[4] GL किरां

[5] GL गिरां

[6] GL भ्रमस्य

[7] GL अनेन

[8] GL तरङ्गवग

[9] GL सुकुमारमेव

[10] GL वरपट

[11] GL मीषत्करम्

निष्यन्दिनीं पौरन्दरीमाज्ञामपरामिव पारिजातमञ्जरीं[1] शेखरीकृत्यनिरीयुराल म्बितलावण्यप्रभावेत्र दण्डैर्विलासैरिव[2] सौविदल्लैरुल्लासितगमनमार्गाः प्रतिक्षणमक्षिभ्रुवविभ्रमेषु प्रतीक्षितावसरेण पञ्चशरेणपरिजनेनेव[3] सेव्यमानाः पुनरसंख्येयतयाविलासिनीद्वीपादिव निर्गताः कामिनीरत्नकोशादुन्मु[4]च्यमाना इव कमलजन्मना वैमानिकनगरवामालकाः[5]।

अथ तासां प्रस्थानमेवावेदयन्ती द्वितीयेव जयघोषणा रशना रराण। अपरमिव [6]काहलं कलकोमलं शिशिजेमञ्जीरयुगलम्। अन्येव सौभाग्यकनकवैजयन्तीदिगन्तमनुरञ्जयन्ती पुरः ससारकान्तिरेखातासां प्रस्थापानार्थमनुसरणस्नेहोन्मुखीषु सखीषु श्रवणरसायनस्रुतः प्रसस्रुरुच्चावचा[7] वाचः।

**[8]भवानाकरणवा[9] लयूथिकायाः**
**प्रथमः पुष्पसमुद्गमोत्सवश्चेत् ।**
**सखि नन्दिनिके [10]समादिशैकां**
**प्रियसन्देशहरामयं प्रणामः ||१०||**

---

[1] GL मञ्जरिं

[2] GL विलासैरेव

[3] GL परिजानेनेव

[4] GL दुच्यमान

[5] GL मालका

[6] GL काहल

[7] GL रुचावचा

[8] GL नाकरणा

[9] GL नालयूथिकायाः

[10] GL, My2 समा

मञ्जुभाषिणि पञ्जरकेलिशुकशारिकाया नातिचिरप्रवृत्तं निर्वर्त्तय सुभाषितगानाध्यापनम्। मन्दारिके महेन्द्रानुवर्तनायनिवर्तस्व मन्दाकिनीजलान्तादपि मां कथं तावदनुगन्तासि ।

**क्रीडाशैले कृतकतनयः सञ्चरन् कृष्णसारो**
**हस्ते दत्तस्तव हरिणिके सोऽयमास्वासनीयः ।**
**मद्विश्लेषासहनमनसो यस्य [1]मार्गोपरोधं**
**शङ्कित्वाहं नयनसरणिं प्रस्थिता वञ्चयन्ती।।११।।**

वीणावति वीणावादनेषु, कलावति कलाविनोदनेषु, नर्मावति सुधर्मासङ्गीतप्रसङ्गेषु, सोममञ्जरि स्वामिरञ्जनहर्षावसरेषु, भवतीनां चिरपरिचयस्नेहभव्योऽनुस्मर्तव्योऽयं जनः इति यथोचितस्नेहोपचारमाप्त[2]सखीजनं कथञ्चित् निवर्त्य नन्दनवनपर्यन्तेन गच्छन्त्यः स्वच्छन्दजल-विहारापसरदैरावत करोत्सारितप्रतिगजदन्तानुकारि[3]मृणालकन्दावकीर्णमभ्यर्णरचित[4] चिन्तामणि-
वेदिबन्धाभिरभिनन्द्यसन्ताकबालोद्यानालवालपूरणीभिः [5]सरणीभिः [6]सूचितानेक[7]स्रोतोमार्गः [8]त्रिमार्गगायास्त्री[1]परिसरमुपासर्पन्न[2]प्सरसः ।

---

[1] GL मार्गोपदशं
[2] GL मास्तसखीजनं
[3] GL दन्तानसारि
[4] GL भ्यणरचित
[5] GL सारणीभिः
[6] GL सुचि
[7] GL नेकं
[8] GL कुमार्ग

**मनोधिनोदप्सरसां सरसाम्भः कणोत्किरः ।**

**आधूतादिव्योपवनः पवनः सौरसैन्धवः ।।१२।।**

ततः स्वाधीनसुषुम्ना पथपरि[3]स्रुतसुधास्रोतसः समृध्दिमिव सिध्दयोगिनां किन्नरमिथुनगीयमानशिवापदानगाधारसविवृता[4]मिव कैलासमूर्तिम्, [5]स्वस्थानुकबलभयेन सुधास्रुतितनुमिव [6]स्रोतोरुपेणपरणताम्, शिवार्चनाश्रध्दालुवालखिल्यविलूयमानतीरोपशल्यमालूर-पल्लवामघमर्षाभिषेकसम्भृतमहर्षिसङ्घविद्यासङ्घर्षमनोहरामव्याहत बलनकलकलशब्दप्रवाहै। वेदैरिव वैधात्रीं[7] तनुं त्रिभिः स्रोतोभिरुद्भासमानाम् अवगाहनमात्रेण मर्त्यानधिनरकमारोह[8]यितुमिवावरोहयन्तीम् उच्चैः पदाश्रयेणसर्वतीर्थानामुपरि वर्तमानतामुद्घाटयन्ती तटान्तघटितचतुर्दन्तप्रहारानुमीयमानमाद्यदैरावतावतारान्तारानिकरदुरालोकसलिलशीकराम्, डिण्डीरपिण्डसन्दिग्धचन्द्रमण्डलां प्रसन्नामपि प्रकटितमुखभङ्गाम् अधिकशीतलप्रवाहामप्यधिका शीतलप्रवाहामप्यधिका तलप्रवाहोत्रिपथगामप्यनन्तपथप्रवृत्तां जह्नुतपोधनैककर्ण[9] विषयाम[10]प्यशेषश्रुतिगोचरानुभावां[1]

---

[1] GL गायास्ती

[2] GL सर्दन्न

[3] GL परिसुत

[4] GL विद्दता

[5] GL सर्मानु

[6] GL स्रोतोरल्पे

[7] GL वैधीं

[8] GL मारोहयतु

[9] GL कर्णा

[10] GL विषयम

परिसरगतकनकारविन्दपरागपट्टबन्धां[2] प्रधानमहिषी सिन्धुराजस्य कालकन्धरमौलिमन्दारमालिकामालुलोकिरे[3] भगवती[4] मन्दाकिनीम्।।

**दीव्यध्दुकूलपक्षा**

**दिव्या इव हंसिका वियद्गङ्गाम् ।**

**अप्सरसो ऽनुसरन्त्यो**

**मदालसा[5] मर्त्यलोकमवतेरूः ।।१३।।**

अवतरन्त्य एव सगन्धमिव गन्धमादनस्य सनाभिमिव मैनाकस्य सोदर्यमिव सुमेरोः प्रसूतिभवनमिव [6]वृषण्वसूनां पर्यात्पदेवकार्यावसर विश्रान्तस्य महेन्द्रस्योपकर्यायमाणैल्लतामण्टपैरतिशयितवैजयन्तसौन्दर्यपर्यन्त खचितपद्मरागवितर्दिकाबन्धबन्धुरोदारमन्दारमूलविश्रान्तबृन्दारकप थिकाभिनन्द्यगङ्गामृदुतरङ्गानिल[7] प्रचारं चारणयुवति चरणोपयुक्त-शेषालक्तुकरसपिशङ्गिता[8]लवालावलोकनसाशङ्कतरङ्गितापाङ्ग चमरीकदम्बमवनीनितम्बिनीपूर्वापर-जलधिमेखलाभिसन्धिबन्धकीलंददृशुरिन्द्रकीलम् ।

---

[1] GL चरानुभावं

[2] GL प्रथम

[3] GL मलुलोकिते

[4] GL भगवति

[5] GL मदालसां

[6] GL प्रषण्वसूनां

[7] GL प्रचारञ्च

[8] GL शङ्कित

**दातुं मरुद्भिरव[1]नीवियदन्त[2]रालं**
**विद्युल्लताततिरिव व्यतिबध्दमुक्ता[3] ।।**
**एकीकृता रुचिभिरेव पुरस्सरीभिः**
**[4]पङ्क्ती कृताव[5]*तरु[6]णाप्सरसां बभासे ।।१४।।**

**अवतीर्य च तास्तस्य निर्विशन्त्यो गिरे श्रियम् ।**
**अस्वप्नपुरसौभाग्यं दुस्स्वप्नमिव नास्मरन् ।।१५।।**

तत्रान्तरे [7]वसुमतीमवतीर्णा[8] वैमानिकवरवर्णिनीविरहासहस्य विहायसो हृदयमिवाविष्कृत-रागमम्बरमणिबिम्बमवालम्बत-पश्चिमामाशाम् ।

**नालं यस्य विना[9]*दिनेपरिचिता [10]नालीकिनीसन्ततिः**
**सम्भूयाप्यपरा दिशः सहचरीच्छाया दिनश्रीरपि ।**
**सर्वाङ्गीणमिमं जहार सकृदाश्लेषेण दिग्वारुणी**
**सन्ताप*[11] सवितुःकृतश्चिदयते कश्चित्परां निर्वृतिम् ।।१६ ।।**

चिर*[12] परिचयस्नेहदर्शितविरहकातर्यासुकमलिनीसखीषु क्षणकृतविलम्बायैवासरश्रियैनि-जगमनमार्गनिवेदनाय पुरोगच्छता

[1] GL मरुदिभरवजी
[2] GL विद्यन्तरालं
[3] GL बन्धमुक्ता
[4] GL पङ्क्तिः
[5] *GL
[6] GL तरणाप्सरसां
[7] GL वसुन्धरा
[8] GL मवतीर्ण
[9] *GL
[10] GL नालिकिनि
[11] * My2
[12] GL परिचय

पूष्णाप्रतिगिरिशिखरं पदे पदे पर्यस्ताः पल्लवभङ्गा इव रक्तातपच्छेदा दद्दृशिरे।

**कामो जेष्यति वा न वा जगदिति ज्ञातुं न्यधात्पुष्पवत्**
**पुष्पे विष्णुपदस्य किं नु समयः शुभ्रारुणे पार्श्वयोः ।**
**पर्यग्राहि[1] च [2]तज्जयार्हमन [3]योरेकं नि*[4] शाबालया**
**सिन्धौ नूनमनास्थया[5] तदितरत्तेन क्षणाच्चिक्षिपे।।१७।।**

विमुच्यमानपत्रा*[6]वलीपष्वङ्गागानि व्यघटन्त कुवलयवनानीव कोकमिथुनानि। आगामिचन्द्रातपास्कन्दन-भयादन्तरवकाशमभ्यर्थयमानेव[7] गाढसङ्घटितपल्लवकवाटान् कमलाकरान करुणं[8] चक्रन्द चक्रवाकी।।

**शैलानां गहनाद्वनेचरचमूभीमे तमालच्छद**
**श्यामे चाक्षुषवस्तुहारिणि तमस्तोमेभसमुन्मी *[9]लति ।**
**चिक्षेपद्युमणिं क्षणेन वरुणाभीष्टा दिगष्टादश**
**द्वीपालङ्करणं भियेव चरमाकूपारकूपाम्भसि ।।१८।।**

अनुचलदरुण*[10]मणिनूपुरमपरगिरिकङ्केलिशाखिनि[11]पदम धिरोपयन्त्यांदिनेन्दिरायामुल्ललासपल्लवस्तबक इव सन्ध्यारागः।

---

[1] GL पर्यग्राहित

[2] GL तर्ज

[3] GL यास्तमन

[4] * GL

[5] GL मनास्या

[6] * My2

[7] GL मभयाद

[8] GL करणं

[9] * GL

[10] * GL, My2

[11] GL शासिनि

वारुणी*[1] हरिद्वारुणीरसतृष्णानिपीतमुष्णा[2] लुतया पुनरुज्जगार सन्ध्याच्छलेन जरठातपम्। अग्रपातितदीर्घरश्मिशृङ्खलावलम्ब-पूर्वमपराम्बु*[3]निधेरन्तर्निमग्नेन सहस्रकरणादाय समन्ततो विमुक्ताः मुक्ताफलनिकरा इव ताराविरेजिरे।

**पत्यौरुचामस्तमिते *[4]सकालः**
**प्रत्यग्रराजाभ्युदयं प्रतीक्ष्य।**
**तमो निचोलस्थगितं[5] चकार**
**ज्योतिस्ततं द्योतलभद्रपीठम्** ।।१९।।

चरमनियमितच्छायावेणयः सुषुमावशोष*[6]तनिमानः शोकश्वासमलीमसां मर्षीं मुखैरुत्सजुन्त्य कर्पूरवत्तिकाशय्या[7]ञ्चलपरिवर्तिन्यः प्रोषितभर्तृकादशामनुभवन्त्यः*[8] प्रभावि कभानवीयादिदीपिरेदी *[9]पिका *[10]रः तपनकरतापानुबन्धादन्तरान्तरा बुद्बुदायमान सर्वाङ्गीणचन्दनरसस्थासकमिव नभस्तारकितमुल्लासः*[11] |

**निजकालिमपटलैरिव**
**निह्नुतविषयंस्वयं च सन्तमसम्।**
**खद्योतदीपकणिका-**
**कलितालोकं चचार किमुतान्ये ।।२०।।**

---

[1] * GL
[2] GL निपीतमक्ष्णा
[3] * GL
[4] * GL
[5] GL स्थगित
[6] * GL
[7] GL शय्यान्त
[8] * GL
[9] * GL
[10] * GL
[11] * GL

**दरस्फुट*[1] कुमुद्वतीदलपुटीकृटीनिर्गताः**
**मिथो मधुकरा निरामयगिरा कृताराधनाः।**
**तमीमुखसमीरशीतलसरस्समीपासिका**
**सुखानुभवकारिणः समवलन्त भूत्कारिणः** ।।२१।।

आसन्नचन्द्रोदयशंसिनी [2]बहिरपसरसदन्धकरनिकरं विचकास*[3] कुमुद्वनोव हरि*[4]द्वासवी।

**सौराज्याधिगमाय पुष्पधनुषः स्वाराजकान्तामुख**
**द्वैराज्याय कुमुद्वती-परिमलोद्गारायतारा*[5] धिपः*[6]** ।
**हारादेशिभिरंशुभिर्वियदलङ्काराय सायंतमः**
**काराबन्धविमोचनाय[7] ककुभां[8] वाराकरादुद्ययौ** ।।२२।।

ततः*[9] सकलदम्पती हृदयसंविभक्त इव*[10] चन्द्रिकास्वादनचटुलचकोरचञ्चूपटापसारित इव सरसकिसलयग्रास*[11] चुञ्चूरलाञ्छन[12] हरिणरसनावलीढ[13] इव प्रथमगिरिपर्यन्त चन्द्रकान्तरसनिर्झरक्षालित इव तत्क्षणं [14]क्षणदाकरस्य रागो जगाल। समय[15]*परिचारक

[1] * GL
[2] GL सरसु
[3] * GL
[4] * GL
[5] * GL
[6] * GL
[7] GL विमाचनाय
[8] GL पाराकरा
[9] * GL
[10] * GL
[11] GL किसलयलाग्न
[12] * GL
[13] GL लीठ
[14] GL क्षणादाकरस्य
[15] * GL

व्याधूतोदयरागपुष्पोपहारपरागमाखण्डलहरिविलासिनीहंसतुल[1]शयन मिवारुचदमृतफेनपटल[2]पाण्डरमैन्दवमण्डलम् ।।

**क्रमाद्विधूताग्रगतान्धकार**
**मुदीयमानो विधुरुल्ललास।**
**शनैः शनैः शक्रदि[3]शात्मदर्शे**
**नीलान्निचोलादिव कृष्यमाणः ।।२३।।**

अपाकृततिमिरशैवालजालैरन्तर्निमज्जितलक्ष्यालक्ष्यताराम ण्डल[4] कुमुदषण्डैरभिनवकौमुदी-प्रवाहैरभ्रसरिति [5]निर्भरमापूरितायां तरङ्गवेगपरिभ्रष्टां प्रेयसीमनवेक्ष्यपरिभ्रमन्नेकचरो राजहंस इव रराज [6]रजनीकरः।

अनन्तरमनतिदूरोदिते सकलजीवलोकहृदयालादनसुधासरसि[7]चन्द्रमसि रममाणरामा-रमणरागसागरतरङ्गेणेवोद्वेलेनचन्द्रिकाजालेन चन्दनरसानुलिप्तास्विव कर्पूरपरागपूरितास्विव कञ्चिदभूतपूर्वं [8]धवलिमानं आवहन्तीषु प्रालेयशैलपर्यन्तभूमिषु परिगृहीतमहार्घ-परिधानप्रसाधनानां सह वरैर्वीरपान[9] मिवमधुपानमहोत्सव-माचरन्तीनां अतिरभसापसारितचोलनिवेशमारब्धमध्यदेशनीर्वाहण-

---

[1] GL हंसकूल

[2] GL पलपाण्डर

[3] GL शक्रादिदात्म

[4] GL क्रमुद

[5] GL निर्भरा

[6] GL रजनिकरः

[7] GL सुधासारसि

[8] GL पूर्वन्ध

[9] GL पाणमिव

मश्रान्ततरलकुन्तलमविरलजृम्भितकाञ्चीकलकलमाकुलीकृतकुलल यावतंसमव्याहतवरारोहरथप्रचारमामर्दितघनोच्चैस्तनपत्रलेखमनवर तपदातिमुखरितकटकमतिगाढकृताङ्गाङ्गसङ्घट्टनमजृम्भत किमपि [1]सापराधिकमनङ्गवीरसाम्प्रदायिकम् ।।

**[2]वीटीदानविपर्ययैः समरसं विस्रम्भसम्भाषणैः[3]**
**केलीमञ्चयथोपचाररचनैः क्षिप्तं विनोदं क्षणम् ।**
**उत्प्रेक्ष्य प्रहरत्रयीपरिमितां ज्योत्स्नावतीं च क्षपां**
**[4]उत्साहः सुरतेनवन्नवमभूदुत्कण्ठया कामिनाम् ।।२४।।**
**वामत्वेऽप्यनुकूलता पतिषु या वामभ्रुवां [5]भर्त्सने**
**[6]यन्मुग्धं हसितं च शुष्करुदिते या कापि [7]सीमा मुदाम् ।**
**युक्तं सर्वमिदं रतिप्रकरणे[8] यूनां जिजृम्भे यतः**
**सौख्यं बाहुनिपीडनैरदनखोल्लेखैश्च केशग्रहैः ||२५।।**
**लज्जा लेभे पदं तासां रतिवैयात्यदूरिता।**
**नेत्रे परं प्रियाश्लेषनिर्वेशदरमीलिते।।२६।।**
**अङ्गानि यानि गौरव-**
**मवहन्त निजं कथंचिदबलानाम्।**
**तान्येव रतिविनिमये**
**दधतो स्तनयोरधीनमानृण्यम् ।।२७।।**

---

[1] GL साम्बराधिक

[2] GL वीटिदान

[3] GL भाषणे

[4] GL उत्साहैः

[5] GL मर्त्सने

[6] GL यन्मुक्तं

[7] GL सामा

[8] GL प्रकरणं

**पतिपरिरम्भारम्भे परिजगले न परमङ्गभूषाभिः ।**
**व्रीडापि हृदयभूषा विजगालारालकेशीनाम् ।।२८ ।।**

अथ तदानीमविरलस्वेदपुलकाङ्कुरकरम्बिताभिर्द्वितीयसुरताङ्गपालिकाभिरिवपोलपालिका-भिरुद्भासमानमलक्षितार्द्रनखक्षताङ्कमनङ्गबाणविध्दमिवनिस्सहाङ्गमतितुङ्गसौधवातायनकवाटविघटनक्षणावतीर्णारासन्नपरिचारिकाभिरिव[1]मन्दमन्दमिन्दुमरीचिभिर्विरचितश्रमा[2]पनोदमान्दोलिताधरकिरणराजिपल्लवव्यजनेन परिजनेनेवाभिमुखप्रवर्तिना श्वसनेन वीज्यमानम्। तत्क्षणोपगतया त्रपया सख्येव सद्यः प्रतिग्राहितशिथिलाभरणपरिधानं, सयावकचरणमुद्राङ्कितैः सङ्क्रान्तसरसाङ्गरागपत्रभङ्गर्विलासी[3] जनैरिव हंसतूलिकाशयनैर्व्यजितरहस्यकिलिकिञ्चितप्रपञ्चमध्दामरतिविमर्दायासितं यौवतमाविष्कृत-परिमलं वकुलदामेवकामिनां भुजान्तरापाश्रयेषु विशश्राम।। तदनु निखिलमानिनीमाननिर्वासनक्रिया-पवर्गशाम्यदूष्मणः पुष्पचापस्य [4]चन्द्रमण्डलमुखसङ्घटिता त्रिपताकाभ्रुकुटिरेखेव त्रियामा विरराम ।

**रजनीविरामशंसी रन्तुमविश्रान्तरागबन्धाभिः ।**
[5]**पादाधूप्रतीयेनानायुध एव नलिननयनाभिः ।।२९ ।।**

विश्रान्तसुरतविलासानां तासां प्रगल्भरतिकूजितप्रतिश्रुतय इव शुश्रूविरे प्रतिकुञ्जं तत्क्षणप्रबध्दानामरण्यपा[1]रावतानामारावाः।

---

[1] GL मन्दामन्द

[2] GL त्रमाप

[3] GL विलासि

[4] GL चन्द्रमणुल

[5] GL पादायुध

कलमधुरमञ्जीरकाञ्चीकलापशिञ्जितानुसन्धानमिव[2] चकार मन्दाकिनीसैकतशय्योत्थितानां हंससारसानां साराविणम् ।

**त्रिभुवनभवनैकदीपधाम्नः सवितुरिवोदयशङ्कया सलज्जैः।**
**मसृणकिरणमण्डलं विलिल्ये*[3] सुखनितासुरतोत्सवप्रदीपैः ।।३०।।**

विहायसि[4] बाह्यपालिकायां विशृङ्खलविहारोन्मुखानामरुण-सारधितुरङ्गाणामतिकठोरखर[5] पुटपाटनशङ्काकुलमती[6] वदूरमपससार तारामण्डलम्। गभस्तिमालिनमर्भकंगर्भे वहन्ती पौरन्दरीहरिदपह[7]सितशरकाण्डमावहतकमपि पाण्डिमानम्।

**व्यक्तं क्रमाद्विघटमानहरिवलौघ**
**मविर्भविष्यदहिमद्युतिकर्णिकाग्रम्।**
**पद्माकरात्प्रथममाप विकासलक्ष्मी**
**भ्राम्यज्जनभ्रमरसन्ततिविश्वकोशम् ।।३१।।**

प्रातः प्रबोधिनीनां पद्मिनीनां सुरभिगन्धिभिररविन्द-मुखैर्निष्ठ्यूता[8] [9]मुखाधिवासन-
कस्तु[10]रिगुलिका इव मधुकरा निरगमन् ।

**शापाक्षरश्रेणिमिवाङ्गलग्नां**
**व्याधूय शैवालवियोगशय्याम्।**

---

[1] GL पादपादरावत
[2] GL सनपानमिव
[3] *GL
[4] GL विलासिवनह्य
[5] GL खुरपुट
[6] GL कुलमिवदूर
[7] GL हरिदवहसित
[8] GL निष्दूता
[9] GL मुखाथी
[10] GL कसूरि 

**विकस्वराम्भोजविहा*[1]रमज्जं**

**रामासखः प्राप [2]रथाङ्गनाम्।।३२ ।।**

**राजीवानां सुचरितफलं रागसाक्षीरथाङ्ग**

**स्त्रीपुंसानां सकलजगती चेतनामूलकोशम् ।**

**आलापानामनितरभुवामाकरः प्रादुरासी**

**द्देवः पूषा दिवसघटिकानाटिकासूत्रधारः ।।३३।।**

**आलोलपाटलकरो विशदांशुमाली**

**बालो वियन्मणितलं प्रथतमाचलाङ्कात्।**

**स्वच्छन्दचारमनु पश्चिमसिन्धुतीर**

**मिच्छन् गृहीतुमिव चन्द्रविहारहंसम् । ।३४।।**

प्रभातसमये[3]तुवादिना प्रथमहरिन्मुखश्चेतिमसि[4]ध्दरसानवेधनेन सन्ध्यारागजातवेदसि सम्पादितसुवर्णभावः [5]सम्भार इव सन्तमसायमरुचदरुणसारथिकिरणकदम्बम्[6] ।

**ववृधे तमसा [7]हन्ता [8]वासवाशाप्रसाधकः ।**

**अपरो जिष्णुतपसामनुभाव इवांशुमान् । ।३५।।**

**प्रभातनैपथ्यभृतस्तदानीं बभासिरे वासववारमुख्याः।**

**पद्माकरेषु प्रविकस्वरेषु रमाः[9] समेता इव रन्तुकामाः ।।३६ ।।**

---

[1] * GL

[2] GL पथाङ्गनाम्

[3] GL समय

[4] GL सिन्धु

[5] GL संरूप

[6] GL कन्दलः

[7] GL तमसां हन्तः

[8] GL वासवासा

[9] GL रामाः 

ततः प्रबुध्यमानपद्मिनीपरिष्वङ्गसुखेन [1]भृशंस्यद्यतीव प्रालेयशीकरश्रुति मन्दमावातिप्राभातिके नभस्वति कोकमिथुनशोकापनुदे[2]*कोकनदकुलकूटस्थसुहृदि त्रिभुवननयन-भावितिमिरातङ्का-गदङ्कारप्रकटि*[3]तोदयपाटलिनि भगवति निदाघधाम्नि तत्क्षणमहर्मुखो[4]चितंकृत्यं[5] निर्वर्त्य यथास्थानममुक्त-दिव्याभरणशिञ्जितव्याजेन समाहितहृदयसम्मोहनार्थ-महमहमिकामिवाच[6]*रन्तीभि-रनिलवशचलितचीनां[7] शुकपल्लवाभिः रागयष्टिभिनङ्ग-विजयपताकायमानं गमनविभ्रमगतागतानां भुजलतानां प्रेङ्खता[8] नखप्रभानिकुरुम्बेन[9]* नितम्बफलक-सिंहासनाध्यासीनः[10] शम्बररिपुसम्राजः[11] सम्पादयदिव[12] चामरोपचारान् नारायणसुहृदोनरस्यापित तप[13]*स्याव्यपोहनाय तपोवनाभिमुखमप्सरः कुलमखिलमपि सललितं चलितमभूत्।

**इति गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दचम्पूनाम्नि**
**किरातार्जुनीये[14]* चम्पूकाव्ये**
**तृतीयोच्छवासः।।**

---

[1] GL भृशंस्वीति
[2] *GL
[3] GL प्रकटितादय
[4] *GL
[5] GL कृत्य
[6] GL मिवाच्चरन्ति
[7] *GL
[8] GL प्रेङ्खाय
[9] *GL
[10] GL सनाध्यासिनः
[11] GL सम्नाजः
[12] GL सम्पादयमिव
[13] *GL
[14] *GL

## चतुर्थोच्छवासः

**श्रध्दां प्रवर्धयसि मे भव***[1] **मोह***[2] **एव**
**त्वं खेलितुं चिदम्बरपरदेव पादे।**
**भावस्तवाद्य विदितः स्थिरभक्तियोगा**
**दत्रात्मनो लयमवेत्य बिभेषि[3] किं वा ।।१।।**

अथतासामराविद्य [4]पटवासचूर्णैरविन्दरजःपुजैरिव पिञ्जरतामाससादवासरः। [5]अतिबहुलप्रसर्पिणीभिरनर्घरत्नभरणकिरणराजिभिस्तरुणदिनमरीचिभिरिव चकाशिरे दशदिशः। कमलवनरिरंसुकलहंसकूजितैरिव मञ्जीरशिञ्जितैरापूरितमम्बरमभूत्।

**तासामक्षिचमत्** *[6]**कृतैः कुवलयास्तीर्णा इवासन्दिशः**
**पादन्यासविलासतः प्रववृते पद्मावृतेवाननी।**
**राकाचन्द्रसहस्रसकुलमिवाकाशं च***[7]**कारो मुखै**
**विश्वं कामयनुताचितमिव भूविभ्रमैरप्यभूत् ।।२।।**
**अव्याहृतप्रसृमराण्यमराङ्गनानां**
**दिव्याम्बराभरण मर्मरशिजितानि*[8] ।**
***[9]आलेपसौरभभृतो मरुतो विदूरा[10]**
**दावेदयन्त्युपगमं वनदेवताभ्यः ।।३।।**

---

[1] * GL
[2] * My2
[3] GL विभेवि
[4] * GL
[5] GL अतिबाहुल
[6] * GL
[7] * GL
[8] *GL
[9] *GL
[10] GL विपश्या

**पश्चाल्लगद्भिरलसैः पदसन्निवेश**

**रुद्वेगमन्तरुप*[1]सर्पणजं वदन्त्यः ।**

**उन्मुक्तरागमुपशान्तमृगं कथंचि**

**ध्यानास्पदं विविशुरप्सरसस्तदीयम् ।।४।।**

प्रविश्य च ताः पर्यन्तपादपान्तरिताः पुरन्दरस्यपि[2]*तुः पुनस्सन्दर्शनोत्कण्ठ्येव पर्वदिङ्मुखास्थितं प्रातस्सवनजपाभ्यासेषु प्रस्फुरन्तीभिः दशनमरीचिभिः स्वच्छन्दतामिवान्तः करणस्य सू*[3]चयन्तमुपभितपल्लवपुटाञ्जलिना स्कन्धावलम्बित कुशचीरादिसम्भारेणपार्श्ववर्तिना रक्ताशोकेन शिष्येणेव वासहृदासारङ्गेण विस्रब्धमध्यासितान्तिकतरुच्छायमका-विवरोपितलाञ्छन हरिणमविच्छिन्नः वृद्धिहैतोस्तपस्यन्तमिव च सेव्यमान[4]मरण्ये सहन्द्रमसमरिव क्षतात्रातुमक्षम एव क्षत्रधर्म इतीव तपस्ययाप्युपास्यमानं तृतीयामिव सूर्याचन्द्रमसो तुरीयमिव गिरिशहरिवे *[5]धसाम्पाकशासनिमा-लुलोकिरे। आलोक्यैनं सचकितमालेख्यनि इव स्तिमिताः। हरिणातिसन्धितावयमहहेतिमुखा*[6] नि दद्दशुरन्योन्यम्। अथ तासा मधुमासमिवासेचनकमेनमासाद्य विकासा इत [7]वासन्तीनां विलासाः प्रादुरासन्। ललितैः इवस्खलन्ती[8] रागरसं लाक्षया किरन्तीववितताति[9] काचन गति विनुतामिव नूपुरेण मृदुरणता

[1] *GL
[2] *GL
[3] *GL
[4] GL सेव्यमन
[5] *GL
[6] *GL
[7] GL वसन्तीनां
[8] GL मवस्फलन्ती
[9] GL किरन्तीविततानि

आसन्नवर्तिनश्चम्पकतरोः शाखाव[1]लम्बिनीपरागाकुललोचनेव [2]काचिदाकेकारमालुलोके। अपरा पुनरनवगीतगीतामृतसङ्ग्रहलोभादिवालाबूकल[3]*रामाभिती-विस्रम्भसखीमिवाभिमतालापसंवादिनीमवादयत परिवादिनीम्। सरभसनाकोत्पतनशङ्कानुरोधिन्या धरण्येव मरत[4]कफ्लकमयूखरेखया[5] वलम्बितचरणाम्बुजा गगनखेलनसुशिक्षितैर्गतागति-विभ्रमैः[6] सप्तर्षिमण्डलाध्यासिताया दिवः सनातन मुनिस नाथाया भुवोऽपि सौभाग्यतारतम्यमिव पश्यन्ती काचिदशोकशाखावलम्बिनीं काञ्चनी डोलामारूह्य विजहारवरारोह[7]।

तासां विलासावलोकनेषु भूलतैव भङ्गं बभार। न खलु तस्य तपस्समाधिः। अक्ष्यञ्चलमेव चञ्चलमभूत्। न तदन्तः करणम्। लोलागमुख[8]* रोमेखलासारसनिकरमेव परिसरपद्माकरादाचकर्ष। न तद्विलोचनं मार्ताण्डमण्डलात्। तदानीममरविलासिनीजनः प्रावर्तयतसर्वर्तुस[9]*मयसन्निधापि निर्मायाः।

**तस्मिन् क्षणे व्यजनताण्डवसूत्रधारै**

**[10]रुन्निद्रपाटलवनैरुपभोगयोग्यैः।**

**छायाभिलाषिपथि*[11] कैः शनकैरभावि**

---

[1] *GL

[2] GL कदाचिदा

[3] *GL

[4] *GL

[5] GL मयूररेखा

[6] GL गताशतिविभ्रमैः

[7] *GL

[8] *GL

[9] *GL

[10] . GL रुनिद्र

[11]*GL

**तोयावगाहसुभगंकरणैरहोभिः ।।५।।**
**नातिजवा वनवाता**
**नातिकठोरातपोद्गमस्तपनः।**
**नातिकृशाञ्चास[1]* रोऽभू**
**दियमपरा सुभगता निदाघस्य ||६||**

विचेयविविधपुष्पायुधसम्भारस्य मदनवीरस्य व्यकोशनिदम् शिरीषमेतद्विचकिलमितः पाटलमिति नयन्तीव पटुतरं रणन्ती भ्रमरपङ्क्तिरितस्ततो बभ्राम।

**उच्चालिताम्बुकणमुभ्रमिते यदेष**
**बभ्राम कामिजनविभ्रमतालवृन्ते।**
**प्रायेणसैव[2]*मरुतोऽजनि बालशिक्षा**
**मध्ये नभः क्वचन मण्डलताण्डवानाम् ।।७।।**

तदा सामग्रीवग्रीष्मलक्ष्म्याः प्रत्यग्रमल्लिकाकसममालहारिणी[3] विलासि[4]*नी परिषदाविष्चकार पश्चाल्लम्बिनीं कादम्बिनीमिवाभिषेकसलिलशीकरासारवर्षिणीं निखिलहृदयनिर्वेशकरीं केशकबरीम्। अथ तासा[5]*माभिषेकार्द्रान शशाकाश्लेषदोहलिनीजयष्टिरस्य हृदयमार्द्रयितुम्। सरसगन्धसारघनसाराङ्गरागरञ्जिताभोगः पयोधरभारोप्यनु[6]*रञ्जयितुम्। अन्तर्निहितसायन्तन-मल्लिकामोदसुरभिगन्धिः केशसन्ततिरप्यमोदयितुम्।

---

1 *GL
2 *GL
3 GL भारिणी
4 *GL
5 *GL
6 *GL

अनन्तरमन्तरिक्षलक्ष्मीपयोधरो[1]* म्भायौवनारम्भः शम्बररिपुसाम्राज्यसहकृत्वरि विधात्रागमे विज्ञानसूत्र वृत्तिकारः स्रोतस्विनीसरस्वदभि-सरणसन्देश[2]*हरःसरसशिखावलकेकाप्रबन्धसन्दर्भशारदाप्रसादो निदाघतापनिर्वापणनिखिलजनसा-धारणधारगृहमजृम्भतक्दम्ब[3]*ककुभसिलीन्ध्रकन्दलोल्लासमयो वर्षासमयः।

**द्वित्राः पयोदलेखाः स्त्रिचतुरः**

**पाथः पृषन्ति विकिरन्त्यः।**

**अह्नाय मालतीनाम[4]* पृषः**

**किल पञ्चषाणि मुकुलानि ।।८।।**

शतमखशरासपाशोपरिसौदामिनीचामीकरस्थलीविन्य[5]स्तपादा केतकीदलकृपाणी-परीतधरणी[6]*महीतलमुज्जृम्भित[7] जलधरकुम्भमुद्भ्रामितबलाकाचक्रं लाघवेन नभसि नृत्यन्ती निर्निमेषैः ककुभसिलीन्ध्रकन्दलैरालक्ष्यतत*[8] पान्तलक्ष्मीः। अविलम्बितमम्बुधरतरुणा-वलम्बितजम्भमथनशरासमेखला[9] कलापा पुनरम्बरान्तमवलम्बमानाकम्पाकुला[10]*चिररोचिरचिरो बिम्बाधरा।।

---

[1] *GL
[2] *GL
[3] *GL
[4] *GL
[5] GL विन्दस्त
[6] *GL
[7] GL मुज्जुम्भित
[8] GL, My2
[9] GL समेला
[10] *GL, My2

**घनपटतटिनीगूढो घर्मन्तविचित्रनर्तकः शङ्के।**

**आसारसूत्रयन्त्रैरनटयदचिरांशुकनकपाञ्चालीम्।।९।।**

*[1]स्वदनमान चापचापल सुहृदि स्मयमानकन्दलसिलीन्ध्रे । तपविगमेऽपि विचित्रं
तत्याज तपस्थितिं न गाण्डीवी।।

**[2]सुजातनवकेतकी[3]*सुरभिगन्धयो मन्थरा**

**वनान्तपवना घनान्तरपयः कणग्राहिणः ।**

**मदावलशिखावलैर्मदकलैः कृताभ्युद्गमाः**

**समाधिनि[4]*रतंतमाकुलयितुं क्षमा नाभवन् ।।१०।।**

तदनुवदान्यतायशस्विनो वर्षाजलदात् प्रकर्षाभिलाषिणीव नवनीप[5]*काननोल्ला-सनिरासिनीकर्णेजपोक्तिरिव कलहंसघोषमुद्भाव्य विघटयन्ती कान्तसमागममखिलस्रवन्तीनामिन्दीवर-कुमुदारविन्दशोकापनुदाशरदाविरभूत्।।

अपसारितशरासलाञ्छनमभिनवशरदागमाभिषड्गशङ्कया समन्ततः सञ्चरन्तीषु, हंसपङ्क्तिषु सापह्नवं *[6]वमिवस्यतुकामेव शुभ्रतां विभ्राणा बभ्राम विततिरभ्राणाम्।।

**आसारासवसेवन- रभसकृतेन प्रियाभिसारेण।**

**शरदुषसि लज्जिता इव[7]***

**सरिन्नवोढाः स्थिताः ससङ्कोचम् ।।११।।**

---

1 *GL, My2

2 GL सुजतानव

3 *GL

4 *GL

5 *GL

6

7 *GL

उल्लासिहंसपरिषदमिव शरदमासेव्यशान्तप्रवाहगतयो मतय इव [1]धीराणामवापुरापः[2]* प्रसादमापगानाम् ।।

**घनैरम्भस्सम्पद्विगमलघुभिर्जीर्ण[3]कुटजैः**

**वनैर्मार्गैर्निम्नोन्नतविनिमयव्यञ्जिभिरपाम्।**

***[4]मरालैर्माद्यद्भिः शिखिभिरमदैः प्रत्युत शर[5]**

**द्विचित्रां संसारव्यवहृतिमिवाबोधयदमुम् ।।१२।।**

**कामिप्रियंकरकदुष्ण[6]वधूकुचेन[7]**

**कामद्विपस्य कटभेदनभेषजेन।**

**प्रालेयधूसरितभानुमतोदभावि[8]**

**कालेन कामितघनागरुलेपनेन ।।१३।।**

अहिमभानुमहिमसाधनमयमिति[9]* समयेन लीलागारकारागृहान्तरेषु कालाग[10]रुधूप-स्नानशृङ्खलासन्दानितः समस्पन्दत मन्दमूष्मा।।

**ऊष्मायितं जेतुमुरोजशैलं**

**दुर्गाश्रितं नालमभूत्सुराणाम्।**

**प्रालेयशैलप्रतिदुर्गयोगात्**

---

[1] GL धीरणा

[2] *GL

[3] *र्जोण

[4] *GL

[5] GL हार

[6] GL दुष्प

[7] *GL

[8] GL लासी

[9] *GL

[10] GL धूमपायस

**[1]दुर्वारसारोऽपि तुषारकालः ॥१४॥**

**कालद्विपे घनतुषारमदे प्रवृत्ते**
**लोलद्विरेफनिनदैरधिलोधृगन्धम्।**
**मारो [2]नियन्तृपदमेत्य वधूकुचाद्रिमा**
**रोढुमुन्नतमतत्वरदध्वनीनान्[3] ॥१५॥**

**ततो यूनां दिशन्[4] गाढपरिष्वङ्गे महार्घताम् ।**
**ऋतुर्हेमन्तसीमान्त सामन्तः समजृम्भृत ॥१६॥**

**स्तोकस्तोकतुषारशीकरकिरा वाते[5]* नातिक्षताः**
**कान्तानामधरा धरा कतिपयै-रश्चूताङ्कुरैरङ्किता[6]।**
**पाणिग्राहवदेत्य हैमनमहर्यातव्यवन्माधव-**
**शिचनैस्तद्धयमारराथ[7]* शिशिर[8] जिष्णोर्जिगीषोश्चिरम्[9] ॥१७॥**

अभिभवतोरपि कृशानुभानुमन्तौ हेमन्तशिशिरयोर्धनञ्जयतपस्तेजः प्रभावं विपर्या[10]*सयितुमचातुर्यमभूत्।
अनन्तरमनभिसन्धिबन्धुरखिलपृष्पन्धयानामयममशरोपनिषदध्या

---

[1] GL उर्व्या

[2] GL नियातृ

[3] *GL

[4] GL मधूनान्दिन्

[5] *GL

[6] GL शिङ्किता

[7] * GL

[8] GL शिशिरान्

[9] GL जिगीषोद्यतम्

[10] * GL

य-तिथिरुद्यानिकोकिलानां [1]*सुप्रभातं चूतप्रियालवकुलानां सुभगंकरण: कङ्केलिचम्पककुरवकानां दिष्टि[2] वृध्दिः, तिलकनमेरुसिन्दुवाराणामवभासको[3] वासन्तिकादिसकलवीरुधाम्[4], सिध्दितीर्थं तृतीयपुरुषार्थस्य, शिशिरातङ्कागदङ्कारः[5] पद्माकरणां, कौबेरहरित् [6]*प्रयाणकान्तिको [7]मार्ताण्डस्य, कान्तारसिन्धुरः[8] कान्ताजनमानधनावस्कन्दनस्य, स्कन्धावारधुरन्धरः कन्दर्पमहाराजस्य, सुकु[9]*मारपवमानकुमारसूतिमासोमधुमासः प्रादुरासीत् ॥

**सद्यः प्रसूतसरलद्रुमपल्लवानि प्रारब्धजानुगतिबालसमीरणानि।**
**आविर्बभूव पुनतिस्फुटपञ्चमानि**
**वासन्तिकप्रथमवासरलाञ्छनानि**॥१८॥

माकन्दरसगन्धोदकावसेकमन्दायमानपरागराजयः [10]सन्दनितमधुपसन्ता[11]*न [12]तोरणस्रजः सन्नध्दकिसलय-कौसुम्भपताकाभिः स्थावररथानुकारिणीभिरनोकौकभरणीभिः

---

[1] * GL

[2] GL दृष्टि

[3] GL मेवहासिको

[4] GL विरुध्याम्

[5] GL गटङ्कारः

[6] * GL

[7] GL मार्तण्यस्य

[8] GL सन्धिः

[9] * GL

[10] GL सन्दानिक

[11] * GL

[12] GL चन्दर्म

समन्तादवलङ्कृतावसन्तवता[1]*रानुगुणमारामराजवीधयो रेजिरे। विलापवचसि वियोगिनीनां [2]करुणरसानुभूत्या विलीयमानेव तनिमानमाससादवासरात्रयी। विबुधविलासिनीजनवसन्तोत्सव-विहारविलोकनबिलम्बादिव दिवसो जगाम द्राघिमानम्। *[3]सरसजमकरन्दस्यन्दजम्बालितायाः प्रमदवनधरण्याः प्रस्खलन्तः किलान्तः। मलयगिरिसमीरा मन्दं मन्दं विचेरुः प्रतिपदमलिपाङ्क्तिः प्रस्तरन्या *[4]सपूर्वम्। दुरालोकतुहिनरजोधूसरणि[5] कतिपयजतुवसराण्यतिवाह्य सुमनोगर्भसमुद्भूतयेव वसन्तसवियमागच्छन्त्यावनान्तर*[6] लक्ष्म्याः सम्मुखीनतयेवचञ्चरीकवलससिध्दयन्त्र- गुलिका[7] निबन्धे सत्यपि न तत्याज तानवमनिलमाणवकम्, मन्मथविवर्ध*[8]नर्मसुहृदो मधोरसाधारणपरिग्रहोल्लासिन्योऽपि पल्लवाधरदानेन परभूतान्प्रसवमु-
खासवार्पणेन*[9]भ्रमरानभिनवपरागपटवासविक्षेपविलासर्दक्षिणं समीरणमपि समसमयमरमयन्त माकन्दलता गणिकाः॥

**चन्द्रानभीष्टतिथि शंसनमुक्तकण्ठे**
**शश्वत्कुहूमुखकुले सति तावतापि।**

---

[1] * GL
[2] GL करुणा
[3] * GL
[4] * GL
[5] GL सारणि
[6] * GL
[7] GL गुलिक
[8] * GL
[9] * GL

**श्यामा कृशा जनतदत्यययाशङ्किनीव**
**[1]प्रेमाधिको भवति *[2]वन्धुषु पापशङ्की॥**

तत्रमदनभुजगर्वनिर्वहकमधुवृतव्राते सर्वातिथौ पथिकहृदयमर्माविधिनिर्माणमाधवीप्रबोधमङ्ग *[3]लपाठके मनस्विनी मानकरटिकूटपाककुले मञ्जरितवञ्चनपरिमलवीरुधिमुक्तकण्ठकलकण्ठपरिषदि तुषारदुर्दिनावग्राहे *[4]शीफरतिशोफलिकशीयुस्रतासि[5] विकासमासेदुषि[6] मधुमासे विलासमय इव जीवलोकः शृङ्गारमयीव सुरसुन्दरीभ्रान्तिः पञ्चशरमय *[7]इव प्रपञ्चाः परिमलमय इव गन्धवाहः परागमयीव मेदिनी पञ्चममयमिव पुनरालक्ष्यतान्तरिक्षम्॥

**मासो मधुर्मदजमूलबलान्यदूरे**
***[8]दिव्याङ्गनाः तदपि नास्य चपाल चेतः।**
**चित्तद्विपस्य मदहेतुसमग्रतायां**
**चैतन्यमङ्कुशयितुं प्रभवन्ति धीराः॥**

---

[1] GL प्रमाधिको
[2] * GL
[3] * GL
[4] * GL
[5] GL, MY2 काशोधुस्रीतसि
[6] GL मासेदुषा
[7] * GL
[8] * GL 

समग्रीकृतपल्लवकु*[1]सुमसमपादितदेवार्चना परिच्छन्दः परिजन इवाजानि समाहितमनसो भीमानुजस्य बहुमानननापदं मधुमासः॥

प्राणायामसमाहितमरु*[2]तंपौरन्दरिमतिसन्धातुमह*[3]न्तादरन्ता खलु वसन्तानिलस्य आस्वादितनादब्रह्माणमेनमुद्भ्रामयितुम-प्रगल्भा बभूवुरुद्धासयिपञ्च*[4]शरापदानबिरुदप्रपञ्चाः पञ्चमगिरः।

अधिगतहरिविहारान्तदन्तः[5] करणगुहामास्कन्दितुमपटुरजायत मधुमदामोदीर्म*[6] वेदी।

मधुसमयलब्धावसराभिरप्सरोभिः प्रोत्साहितस्य पुष्पधन्वनो बाणाधारित धैर्यवज्रपञ्चरे*[7]धनञ्जयमनसि निपत्य प्रत्याहता इव*[8] तास्वेव निवृत्यापतन्॥

**आबध्ददुर्दिनममन्दमरन्दवर्षै-**
**रराम चूतमभिकूजति[9] कोकिलानाम्[10]।**

---

[1] * GL

[2] * GL

[3] * GL

[4] * GL

[5] GL दन्तःकारण

[6] * GL

[7] * My2

[8] * My2

[9] GL कूजित

[10] GL कोकिलाद्याः

**[1]निर्घातनिस्स्वनभयेन निमीलिताक्ष्यो**
**नाकाङ्गना विजयनाम जपं वितेनुः[2]॥२१॥**

**बध्दव्रते प्रार्थितदुर्लभेऽस्मिन्सुरेन्द्रसख्योबहुधाव्यषीदन्।**
**यथा महानिष्टतमे ऽभिलाषः तद्दुर्लभत्वेऽपि तथैव खेदः ॥२२॥**

तदनुधनञ्जयानुराग अवष्टम्भेनसहनीदुहितृ स्नुषाणाम्। इदं भिरातिशयकार्यलाघवेनेव पुरस्सरदवयवाभिः परिगलितगौरवतया प्रसवापचयानुपदयनीयम् परिहरामि। अन्यतोगच्छीन[3]* खालघीयसीभिः सर्वाङ्गीणसौन्दर्यस्य तस्य प्रथमनिर्वर्णितैकाङ्गनिर्निमेषपिरतिष्ठितदृष्टिव्यापारत*[4] पंक्तिकर्णदुरेपवाह्यहरिणे वयवमात्रश्लाघापरस्पर स्पर्धालुभिरूर्ध्वंपदं यथा कथंचिन्निम्नगाभिरिवामाकामिनीभिः प्रत्यगामि*[5]॥

*[6]**अधिलक्ष्मणमहान्प्रमदमनक्षरमागतानां**
**तासां मुखानि जगदुस्त्रिदिवेश्वराय**।

**प्रत्यूषशीतकरसपर्युषितप्रसून्युमायण**
**माभनयान्त पुनस्साकृतम् वा न महिमा हिमांशोः** ॥२३॥

अथ तदानीं प्रासादाभिमुखः शतमखोऽपि वर्णिकामादाय वर्षीयसोज्वलजि*[7]न्निवर्यणेषम बलात् प्रादिक्षं प्रवयसेन

---

[1] GL निर्वात
[2] GL विनेतुः
[3] GL, My2
[4] * GL
[5] * GL
[6] * My2
[7] * GL

धिषणमनीषामिव दर्शितसुपर्वार्जवां[1]यष्टिमाधारयन् विस्रंसाविपाकसितावयवसन्धिबन्धगाढ[2]*तानसन्धानं कीलैरिवनिगुते नेत्रबाहुल्ये निरूढरिव तदीयपदैस्तिलकबिन्दु[3]भिर्दन्तुरितां तरङ्गितपटच्चरक्षौम[4]*लक्षणोपवलीभङ्गभङ्गुसंप्रा*[5]कृतामाकृतिं बिभ्राणः कम्पितसर्वावयवतया कदाचिदपि निर्जराधिराजेन परिग्रहीतास्मीति [6]प्रवर्तित*[7]प्रमादनृत्तयेवरजसाप्रसाधितः सप्रश्रयरचित यथोचितोपचारभिररण्यदेवताभिरभिनन्दि-तागमनोविनोदितागन्तुकजनपरिश्रममाश्रमपदं तदीयमास[8]*साद॥

**अस्य पुण्यधने वृध्दिमश्नुवाने दिने दिने।**
**[9]आधमर्यभयेनेव च्छन्नवेषः स सन्यधात् ॥२४ ॥**

**असीदन्तममुन्दान्तस्वतस्विगन्धेनतेज।**
**सपर्ययाघ्यादिकया प्रतिजग्राह पाण्डवः॥२५॥**

**अर्हणां प्रतिगृह्यास्य विश्रान्तो हरिरासने।**
**वाचमूचे जराक्रान्तवैक्लब्यलुलिताक्षराम्॥२६ ॥**

महाभाग वयः परिणाममन्तरेण तवाद्भुतेयं तपोधन[1] वृध्दातिशायितवश्रद्धा*[2]।

---

[1] My2 सुपर्वान्दषां
[2] * GL
[3] * GL बीज
[4] *GL
[5] * My2
[6] GL परिगृहीत
[7] *GL
[8] *GL
[9] GL आधमर्ण्यभय

***[3]तपसे बन्धमूलस्य तावकस्य फलिष्यतः।**
**द्रुमस्य पुष्पितस्येव दूरादायाति सौरभम् ॥२७॥**

**अतिगौरवं गुणानामवनतिमेवातनोति साधूनाम्*[4]।**
***[5]प्राग्भारेणफलानां प्रणमन्ति परोपकारिणस्तरवः ॥२८॥**

सर्वथा [6]प्रत्यवायबहुला प्रवृत्तिरात्मनीनामर्त्यानाम्।

यदेते पुनरविज्ञातसुखदुःखे बाल्ये प्रज्ञा*[7] शैथिल्येन [8]विषमशरशरण्ये तारुण्ये विषयासङ्गेनविस्रंसा वैक्लब्यनिर्भरे स्थाविरेऽपि करणवैकल्येन कैवल्यसाधनाय हृदयन्त*[9] समादधते॥

**जीवं जवादुरवबोधगतिः कृतान्तो**
**यावन्नकर्षति तरक्षुरिवेणशाबम्[10]।**

**यावज्जरा न पुनरिन्द्रियविप्लवाय**
**तावत्तपोविधिषुत *[11]त्वविदस्त्वरन्ते॥२९ ॥**

पश्चिमप्रथमपारावारकटाहपाथसि मज्जनोन्मज्जनैरेव मानुषाणामनुकूलमायुष्कलाममिमीतेमान-पत्रमार्ता[12]*ण्डमण्डलम्।

---

[1] GL तपोवन
[2] * GL
[3] *GL
[4] * GL
[5] * GL
[6] GL प्रत्यन्धाय
[7] * My2
[8] GL विषमा
[9] *GL
[10] GL वैणशाबम्
[11] *GL
[12] *GL

अनित्यता खलु जातमात्रं मर्त्यमरिष्टधात्रीणां प्रथममह्नायपरिगृह्णाति। धात्रीवलयपा[1]*त्रीतिष्टितेषुचित्रीयमाणपाणिभाग्येषु भगवान् न कस्योपरिमनः कदा निधास्यतीति दीर्घदर्शनस्त[2] पस्सितुमध्यवस्यन्ति॥

सागर[3]*लहरीसम्पातनश्वरोशरीरावस्था विद्युदुन्मेषविडम्बिनः सम्पदवष्टम्भाः। पाणिनमनुगच्छन्ति च्छेकच्छागा इव पदे पदे विपदः।

सिकतिलनदी*[4]लतामूलप्रायमायुः अशेषकरणहरिणाकर्षणमृगमरीचिका, निम्नोन्नतप-दविपर्यासनवर्षागमवाहिनी, परकायव्यूहप्रवेशकौशलसियोगिनो [5]*रयशः परकर्पूरानुपयोग लिकुचरसधारा। मलिन एव जने घन इव [6]सौदामिनी परिस्फुरन्ती। मधुर*[7]गणेमायुविकृति-रिवसितारसेतिक्ततामावहन्ति।

महौषधस्याशाशीविषाक्रान्तिरिव, कामादिदेवदोषस्य*[8] काटवं [9]सहजमनुघ्टाटयन्ती, क्षुधेषसदसद्वस्तु विवेकहारिणी*[10],

---

[1] *GL
[2] GL स्तपस्थित
[3] *My2
[4] * GL
[5] *GL
[6] GL सौदामिनि
[7] *GL
[8] *GL
[9] GL काटमं
[10] *My2

प्राकृतजनप्रलोभकारिणी[1] कार्यदर्शिभिरेवमव धार्यतेऽनार्यलक्षणा लक्ष्मीः।

**[2]विविधायुधसध्रीया *[3]वेषेण तु निवेद्यते ।**
**तव तीव्रं तपः क्षात्रं धर्मनिर्वाहकार्मणम् ॥३०॥**

**अभिलषति पुरुषकारैरारोपयितुं सुखानि यो विषये*[4]।**
***[5]अयमीहते विषलता ममृतासेकै रसोत्तरां[6] कर्तुम् ॥३१॥**
**तपः प्रभावैस्तव सम्मुखीनां शान्तिः प्रतिद्वन्द्विभिरेव शस्त्रैः।**
**नीता विसंवा *[7]दजडामवस्थां निश्रेयसश्रीरुपयाति न त्वाम्॥३२॥**

**अपायबहुलकर्मफलानपेक्षतया महेश्वरार्पितं सुकृतं पुनर्भवाय[8] कल्पते*[9]॥**

**सौम्यश्राम्यसि किं मुधा विमृशय श्रेयः परत्रेह च**
**ब्रह्मण्येव निवेदयाद्य सकलं कर्म प्रशामा[10] हृदा।**

**तत्ते दास्यति निवृत्तिं *[11]च्युतपुनस्सम्भूतगीतिज्वरात्**
**तस्मात्कः प्रियबन्धुरस्य भुवने यो यस्य धत्ते धुरम्[12] ॥३३॥**

---

[1] GL कारुणी
[2] GL विवधवायुध
[3] * GL
[4] * GL
[5] * GL
[6] GL रासोत्तरं
[7] *GL
[8] GL पुनभर्वाय
[9] *GL
[10] GL प्रशमा
[11] *GL
[12] GL पुरम् 

**पुनर्भूतिश्वभ्राण्यनवधिगभीराणि कृतधीः**
**तरीतुं यः कोऽपि प्रभवति तपस्सिध्दिमणिना[1]।**
**इहस्तोकस्फूर्जद्विषयरसकृष्णो[2]रगमणि**
**स्पृहोन्मेषः केषां न भवति पुनः पादविपदे ॥३४॥**

**स्वयमेवा*[3]त्मबोधाय कर्म सञ्चिनुतेकथम्।**
**आलानाय तरोः शाखामाहरन्निव कुञ्जरः ॥३५॥**

**पौरन्दरीमिति गिरं पुनरद्रिणेव**
**स्वैरं दरी प्रतिरवैरभिनन्द्यमानाम्।**
**विख्यातनीतिरुपलभ्य विनीति गर्भ-**
**माख्यातुमारभत भारतवंशदीपः ॥३६ ॥**

सुधाकरमिवावदातपक्षः स्वल्पमपि गुणं [4]*गुरुकरोराति साधुजनः। सदृशमेव सर्वज्ञताया युक्तरूपं वयोधिकं[5] ब्राह्मणस्य समुचितं सर्वजनीनताया भगवतेदमभिहितम् ॥

**उल्लासितो*[6] पनिषदम्बुनिधेर्भवार्त्ति**
**तापच्छिदस्तव वचो नवचन्द्रिकायाः।**
**दूरान्वयामधिगतेन धुरं मयाद्य**
**पद्माकर व्यवसितं [7]*प्रतिपन्नमासीत्॥३७॥**

तदाकर्ण्यतां तातपादेन। विदित एव धुरन्धरः सत्यसन्धानां पाण्डवानामस्माकं ज्येष्ठो युधिष्ठिरो नाम॥

---

[1] GL सिद्ध मणिना

[2] GL पुष्णो

[3] * GL

[4] * GL

[5] GL ब्राह्मण्य

[6] * GL

[7] * GL

**[1]*मायाभिस्समं येन दायादैरक्षसेविना ।**
**पणीकृता वयं राज्यमात्मापि सहधर्मिणी॥३८ ॥**

अपरमिदमतिह्लेपणीयमावेद्यते -

**मध्येसभं*[2] हरति मानमिवान्तरीयं**
**दुश्शासने द्रुपदराजकुमारिकायाः।**
**उल्लङ्घनव्यवसितानुदधीनिवास्मान्**
**आर्यस्य तत् क्षममरुन्ध[3]* विधेरिवाज्ञा ॥३९ ॥**

**चन्दनानीव जात्यानि[4] चरितानि क्षमावताम्[5] ।**
**शीतलीकुरुते[6] रुष्टं चेतस्तोयमिवोष्मलम्॥४० ॥**

**[7]*व्यासोपदेशादादेशाज्ज्यायसोऽपि गरीयसम्।**
**आराधनाय स्वाराजो धारयामि तपोधुरम् ॥४१॥**

***[8]उभयीगतिरुच्यते बुधैः कुसुमस्याप्यभिमानशालिनः ।**
**शिरसि ध्रियते जनेन वा विजने वा विपिने विशीर्यते । ४२॥**

**बहुभिरिह किमुक्तैर्या *[9]वदिन्द्रप्रसादं**
**तनु सुखनिरपेक्षस्तावदासे[10] समाधौ।**
**विमतनिकृति[11]शल्योध्दारसिध्दौषधित्वं**
**[1]व्रजतुयमविधेयो *[2]वासवोवासवोमे[3] ॥४३॥**

---

[1] * My2
[2] *GL
[3] *GL
[4] GL नात्यानि
[5] GL क्षमार्घताम्
[6] GL कुर्वते
[7] *GL
[8] *GL
[9] *GL
[10] GL वदासेन
[11] GL विकृत्ति

इत्येवमरियत्येव तस्मिन्नवसाय तदीयं व्यवसायम् आस्थाय च निजरूपमानन्द विकचनयनेन्दीवरस्पुरन्दरो *[4]मनोरथसंसिध्दि-साधनमहेश्वराराधनमादिश्यान्तरधात्[5] ॥

**इति गुरुस्वयम्भूनाथरामकृतौ शङ्करानन्दचम्पूकाव्ये**

**चतुर्थोऽच्छ्वासः**

[1] GL जयतु
[2] *GL, My2
[3] GL वसवोभे
[4] * GL
[5] GL रधाम्

### पञ्चमो ऽच्छवासः

[1]जटाटव्या हंसो विधिरवधिमप्राप्य विधुरो
जिहीते पादाब्जं तव नखमयूखैस्तुलनिभा*[2]।

[3]पुनस्तस्मै मौलिं स्फुटयितुमिव प्रागभिमतं
सभानाथोत्क्षिप्तं जयति तदिदं नाट्यलटहम् ॥१॥

विधिवदथ विडौजसोनिदेशा*[4] दकृत विशिष्य हरप्रसादनाय।
प्रणिहितहृदयः परोरजांसि प्रथितयशांसि तपांसि पाण्डुसूनुः ॥२॥

महेश्वरपरिग्र*[5]हीतसुकरोष्ययेव वैमल्यपुष्ठि वपुषि मनस्वी पुनः
स्वीचकार तनिमानम् ॥

पणैर्जलैश्च पवनैः स्वशरीरवृत्तिं निर्वर्तयन्मु*[6] निरसौनियमक्रमेण।
दिङ्नागकूर्मफणिनां ददृशेऽनुकुर्वन् सारं
महीभरसहिष्णुमिवाभिलष्यन् ॥३॥

आरुह्य दुस्तरतपस्तरुमानुपूर्व्या भूयोवहन्नवहितः प्रपदेन मन्ये।
उत्क्षिप्तबाहुरयमूर्ध्नि[7]निविष्टदृष्टिः अन्त्यं तदीयफलमाशु
समाजिहीषुः[8] ॥४॥

---

[1] GL जराटव्यां
[2] * GL
[3] * GL
[4] * GL
[5] * GL
[6] * GL
[7] GL निवृष्टि
[8] GL जिहोर्हु

**मध्ये निजाङ्गमहसापरि*[1]वेषभाजा**
**मुद्वाहुरग्रचरणेन बभौ स तिष्ठन्।**
**आवेदयन्निव तपस्थितिसिन्धुगाध**
**मन्तर्मुखैरपि चिरादविभावनीयम्[2]॥५॥**

तस्य *[3]तपस्समाधियोगेषु युगपदासादितविकासानामन्तः कमलकोशानामाजानपावनामोद-जिघ्रा[4]सापरवशा इव तस्तम्भिरेसद्यनिलामन्त्रभावना विशेषसन्निधापितस्यभगवतो वृषभध्वजस्य भूषणभुजङ्गफूत्कारपवनोदूतैरङ्गरागभस्मपरागले *[5]रौराकीर्यमाणमिव निमिमील[6] नयनयुगलम्।

कठोरी भवति घर्मसमये खाण्डवारण्यसमर्पणोपकारप्रीतचेतसा जातवेदस*[7]तादृक्षुदिक्षु परिगत इवाङ्गरक्षार्थमुष्णालुजीवलोकदाक्षिण्यादूष्माणमापिबन्निवनिर्निमेष बध्दलक्ष्येण चक्षुषा धनञ्जयः पञ्चतपागभस्तिमदभिमुखमवतस्थे।

अभावि हर्षोत्तरमर्जुनेन धाराम्बुपातेषेवपि तन्निचित्रम् आमेदनं*[8]यत् पुनरर्जुन्यनामम्भोकालस्य स हि स्वभावः॥ तुषारशीकरानुबध्ददुर्दिनासु हैमनीषु यामिनीषु सागरशयनीयशयिनी नारायणस्य [9]साहचर्यपरिचयेनेव सलिलमध्यमध्युवास वासवतनयः॥

---

[1] * GL
[2] GL भावतीयम्
[3] * My2
[4] GL मोदञ्जिघा
[5] * GL
[6] GL निमील
[7] * GL
[8] * GL
[9] GL सहचर्य

उपनिषदैतीह्यगोचरमचार्मणलोचनग्राह्यमनाय नयन*[1]पथमानेतुमभ्यर्थयन्निव पृथासूनुरनुदिन-मात्मीयतनुशोषणंपेक्षमुपवसन्[2] वृषध्वजमारराध॥

**सम्प्राप्ते तपसा*[3] धमर्णपदवीं स्वामिन्यपर्णाधिपे**
**गाण्डीवी स्वयमातपे निरशनस्तस्थौ यदेकाङ्घ्रिणा।**

**नानृण्यं गतवान् गते बुहतिथे*[4] कालेप्यसौ किं परं**
**देवेनाप्यनुभावितोऽस्य गुरुकोदण्डात्किलातिक्रमः ॥६॥**

**आपूर्य शैलकुहरं हरता तमांसि**
**तेजस्त्रयं तृणयतास्तृतादिगन्तान्।**

**धाम्ना समाधिसुलभेन धनञ्जयस्य**
**पश्चात्कृताजनि परो रजसां प्रतिष्ठा । ७ ॥**

ततः पावकादपि पावकेन तपनादपि परोपतापिना दिगन्तरव्यापिना तदीयतपस्तेजसा तिरस्कृतमहिमानो हिमालयकृताश्रमावाचं यमाभगवन्तमभजन्तशरणमखिल-जगदधिष्ठाता रमसुरपुरविजेतारम्॥

**ज्योतीरसोपलसुदर्शरसातलाहि**
**कोलाहलासतकुमारविहारवाहम् ।**
**आसेदुरास्पदममी पुनरादियूनोः**
**संवित्प्रकाशमिव चाक्षुषमद्रिराजम् ॥८ ॥**

---

[1] * GL

[2] GL, My2 मपोषन्

[3] * GL

[4] * GL

तत्र च यथावसरसङ्गीतवासप्रसङ्गी तुरङ्गमुखी मुखावलोकनहर्षहेषमाणबाह्याङ्कणनिबध्दहरिहय-म्बमदाम्बुजम्बालितपरिसरोध्देशशिशयिषमाणयममहिषं, हरवृषभश्वासोच्छवासरभसयातायातपवनवा-हनहरिणानुस्मृत निजस्वामिकृतशिक्षाविशेषम्, संबाधकुपितसौवदल्लवेत्रप्रहारविभ्रश्यदमरकोटी-रहीरशकलसिकतिलतोरणाजिररिरंसमाणवरुहिणराज हंसम्, अपरगोपुरानुक...कुबेरपुष्पकवि-वरप्रविष्टजरत्तापसोपहासचतुरचारणवैहायसिकमभ्यन्तरप्रविष्टानां प्रभूणामागनवेल...बलमागच्छतः प्रधानपारिषदान् पृच्छद्भिः सज्जीकृतवाहनादिनानापरिच्छदैः सुरासुरसेनापतिभिराकीर्णपुरोभावार्चना तारतम्ययथोचितलब्धाधिकारैः सिध्दपुरुषैरध्यासितकक्ष्यान्तरं, सहस्राक्षेणाप्यनुप्रेक्षणीय रामणीयकानुभवमनन्तमुखैरप्यवर्णनीयसम्पत्प्रकर्षमपवर्गमार्गमिव निसर्गदुर्विगाहमगाहन्त सकलजगत्समृध्दिसम्भारप्रत्याहारं महेश्वरनगरप्रतीहारम् ॥

**या या परत्र सोच्छवोया तां तां द्वारस्य सङ्कटे।**
**दिवौकसां ते ददृशुः प्रभुतां निभृतामिव ॥९॥**

तदनु तदा गमनाभिनन्दिना नन्दि सानन्दमन्तः प्रवेशिताः सन्तानकतरुच्छायानिषङ्गिणं वन्दारुजनवरप्रदानयशः सन्तानमिव सदेहबन्धं ककुमदन्तं प्रदक्षिणीकृत्य सप्रश्रयमास्थानमण्डपमासीदन्त एव दिगन्तरव्यापिना तेजोविशेषेण पङ्क्तीभूतसुरासुरमहर्षिपरिगत-पार्श्वोभयभयमन्तरालरथ्यामुखमापूरयन्तं

परिजनवीज्यमानषड्भरागमणिदण्डप्रबलोहितोभयपरिग्रहेण पतनोत्पतन-व्याजेनसन्ध्याभ्यान्निवेद्यमाननियमप्रणाममिवनिरूपणीयम् भस्माङ्गाचर्मादि महार्घवां[1] वैराग्यस्य लक्षयन्तमक्षयनिधिं मोक्षसम्पदामादिदे*[2]शिकान्तारकोपदेशस्य*[3]मूलदीपं मुरमथनादितेजः प्रर्वतनस्य [4]ब्रह्माकरण्डनिहित [5]जगद्गुण्डुकसन्निधापन तिरोधापनमहेन्द्र जालिकमोक्षकार[6]शिखालङ्कारमुल्लसितदिक्कालानवच्छेदमपरिच्छेद्यमागमनिगमैरगोचरं गिरामविषयं मनसामवसानपदं नमसामुपनि[7]*षद्वरमुषः पुण्डरीकमुमामधुकरीविहृतेरन्धकारिता[8]शास्यं विभावरीमुखमिवेन्दुरेखाविभावनस्य विततागमशाखा[9]*विमर्दसुरभिं पाटीरमिवा[10] हि परिपाटीपरिवेष्टनस्य[11] सलिलधरमिव सागरविषोपयोगसञ्जीवितदिवौकसं शम्बरमिव सव*[12]नमृगानुसरणं[13] वाराणमिव दानवारिनवघनश्यामल[14] पदं

---

[1] GL महार्घतां

[2] * GL

[3] * GL

[4] GL बृण्डकरण्ड

[5] GL जगदा

[6] GL मोङ्कार

[7] * GL

[8] GL रण्डकारिता

[9] * GL

[10] GL वटारमही

[11] GL परिवेषणस्य

[12] * GL

[13] GL सारिण

[14] GL नवश्यामलपदं

पदमङ्गं विभ्राण सङ्गीतमिवाङ्गीकृतवृषभगतिं महोत्सवमिव [1]*परिगृहीत सर्वमङ्गलोच्चैस्स्तनकलशविन्यासधन्यमङ्ग-दाहितिलकमप्यनङ्गदाहितिलकमागमतत्वगमितरुचिमप्यनाग[2]मत त्वगमितरुचिं खण्डपरशुभाविता नन्दमप्यखण्डपरशुभावितानन्दमवन्दिषत भगवन्तमिन्दुशेखरम्॥

**निवेशिताः क्वापि भवत्समागमं निवेदयामीति शिलादसूनुना।**
**इमे निमेषासहनैर्विलोकनैः क्रमेण देवस्य [3]पपुर्वपुश्रियम् ॥१०॥**

तदेते प्रथममवेक्षायामासुरमृतरसक्षीरपूरितरजनीकररेखारजतशुक्तिकासनाथ-मन्तरालविहरदमरसरिन्मरालीकमलीकलोचनस्य तटित्पुञ्जपिञ्जरं जटाजूटहाटकशलाकापञ्जरमनुप-दमवेक्षन्त कालकन्धरस्य कालातिलङ्घनलीलायशोऽङ्कुर शङ्कनीयां मकरध्वजमान्त्रिणपार्वतीप्रणय- संवर्धनाय बध्दामिव सिध्दमूलिकामासेचनकसौन्दर्यसीमन्तरेखामिन्दुरेखाम्। तदनु निर्व[4]*र्णयन्नपर्णापतेः[5]कर्णाभरणपदावलम्बिकम्बलाश्वतरगीयमान युगवि[6]*गमापदानश्लाघालज्जयेव जनितसङ्कोचमलीकलोचनम्। अनवरतभस्मोध्दूलनैरप्यनपनेयमकोपलालितकुमारावमर्श-कौतूहलावहमुपनिषदुत्तंसतमाललोभनीयमप्यवदातामनितरसुधाशन साधारणीं कीर्तिमा[7] सत्रयन्तं च *[8]चाधिरे। चन्द्रशेखरस्यगारुडम-

---

[1] *
[2] GL मप्यनाङ्ग
[3] GL, My2 पपुश्रिया
[4] * GL
[5] GL कण्ठाभरण
[6] * GL
[7] * My2
[8] * My2

णिग्रैवेयकसधर्माणं कालकूटगरल कालिमानं सबुहमानमालुलोकिरे। नीललोहितवाहनमाहासहायककुदशिखरास्फालनमसृणकङ्कण-भुजगफणामणिपाणिमधि[1]वसन्तमवतंसशीतांशुकलोच्चयकालप्रति पालकमिव हरिणबालकं, महोदधिमथनविश्रान्तस्य मन्दरस्येव नीलकन्धरस्य [2]भोगिपरिकर *[3]बन्धनबन्धुरमदर्श यन्मध्यदेशम्, अनन्तरमानन्दभरमन्दरा तेषां दृष्टिरष्टापदपादपीठप्रभाय-ष्टिसमुत्तम्भिताभिरन्तकविजयाभिज्ञानचीनांशुकपताकायमानाभिर्न खमयूखरेखाभिरापीत[4]पूर्वमवनमदमर
कोटीरहीरकिरणपूरमिवोद्वमति परमरमत [5]पार्वती वल्लभस्य पादपल्लवे। तत्क्षण एव दाक्षायणीप-तेर्भ्रूक्षेपलब्धोनुज्ञेन नन्दिना तपनीयपाद[6]*पीठान्तिकमुपनीयमानास्तपोधनाः [7]प्रणामानुपदं भीमानुजतपोविशेषमशेषं तेजस्तिरोधानगभस्तिमदुदय[8] मावेदयन् ॥

**भुवनैकविभो कश्चित्पुष्णाति पुरुषस्तपः।**
**तेजसा भूयसा तन्वन्द्युमणिं[9] च तमोमणिम्[10] ॥११॥**

**वहति धनुरुदारं वारवाणं च तूर्णो**
**[1]जपवरमपि सोऽयं वल्कलं जाटजूटम्।**

---

[1] GL पाणिमदि

[2] GL भोग

[3] * GL

[4] GL रापोत

[5] GL परमयत

[6] * GL

[7] GL प्रणमा

[8] GL मुदय

[9] GL तन्वद्रमणि

[10] GL तममणीम् 

**नृपति नियमधर्मौभिन्नसर्गौ[2] निसर्गात्**
**पुनरिहरुचिमग्र्यां पुष्यतः स्पर्धयेव ॥१२॥**

**ग्लपनदहनैर्गात्राण्याप्लावनैरपि शोधयन्**
**[3]भुवनकरणं भूतग्रामं धुनोति धिनोति च।**

**स यदि वरदक्षान्तिं सन्त्यक्षति[4] त्वदुपेक्षया**
**जगदपि तपोवह्नावह्नाय नेष्यति हविष्यताम्[5] ॥१३॥**

इत्येवमावेद्य विरतवचसि वीतरागे बदरीतपोवनसनातनमुनिभिरनुग्रहणीयो नारायणसहचरो नरोऽयमिति क्षेमाननो दूरावपातदुर्मोचमायावागुरावलय-नियमिताशेषजीवो देवोऽपि वनेचरानुरूपं रूपं प्रत्यपद्यत[6] कृत्तिवासाः॥

**संवेष्टितं स्तबकितेन लतागुणेन**
**देवस्य कैश्यमरूचध्दरचन्द्रमौलेः ।**

**अस्योपमानमजनिष्ट [7]यदीन्दुभूषो**
**भूयः स एव भुजगोद्ग्रथितः कपर्दः ॥१४॥**

---

[1] GL जपवटमति

[2] GL तिसर्गात्

[3] GL भवन

[4] GL संत्यक्ष्याति

[5] GL हविष्यताम्

[6] GL प्रतिप्रवृत्त

[7] GL यदीजभूषो

तदानीमभिनीतकिरातवेषस्य भवानीपतेः करकलितानुषङ्गसारङ्गःशरवणभबन्धुरन्धरश्चन्द्र-कीचण्डीरथः[1] कण्ठीरवोऽपि [2]दाविकनिर्विशेषं तदशेषमभूत् ।

भगवती [3]भवानी पुनर्धरणीधरराजराजहरिणीकृतानीपवनकिसलयानिवसनयन्तीवतंस यन्ती कुसुमानि किसलयिता कुसुमिता किरातराजरा *[4]गलतेवलक्ष्यमाणा [5]कुञ्जरासुरकुम्भमुक्तामणिगुम्भितेन दन्तच्छदकान्तिच्छुरणदर्शितगुञ्जासराधिकारेण हारेण वीरपत्नीभावं विभावयन्ती दानद्रवतिलकजातुषमुद्राङ्कितं दिव्यरूपसौभाग्यनिदानगर्भमाननं*[6] दधाना कबरीकलापकामनीयकावलोकनकौ तूहलविस्फारितचक्षुषेव कर्णपूरचन्द्ररूप[7]सौभाग्यविपिच्छकया चकासती स्वयमुररीचकार शांभवीं*[8] शबरसहचरीभावनिर्णायिकां वर्णिकाम्॥

**पत्युर्वामाङ्गभावेन प्रागेव परिशीलितम्।**
**जग्राह लीलयादेवी *[9]गृहीतैकशरं धनुः ॥१५॥**

अग्रतस्सरेण विग्रहवता प्रणवेन नीयमानैरुदात्तमुखस्वरकार्तस्वरशृङ्खला*[1] शोभितैः

---

[1] GL श्चन्द्रकाशण्डी
[2] GL दीपिक
[3] GL भवीनो
[4] * GL
[5] GL स्फुञ्ज
[6] GL गहमाननं
[7] * GL
[8] * GL
[9] * GL

शिक्षादिमाङ्गसाक्षात्कृताच्छोटनपारच्छदैः समगच्छत सोमावचुङः सामादिनिगमसरमा कुमारैः।

**आलोक*[2] यानपरमार्थकिरातपार्श्वे**
**विष्वग्द्रुतानभिनवश्रुति विश्वकद्रून्।**
**उद्घोषपूर्वमुदपुच्छयतातिरोषात्**
**सन्नव्यभैरवरथस्वनसरमाकुमारैः*[3] ॥१६॥**

क्रमेण च शब्दायमानवीणावेणुधण्टिकाशृङ्गकाहलबहुल-कोलाहलभरितहरिदन्तरैर्मुद्गरलगुड- चक्रकोदण्ड *[4]परश्वथादि विविधायुधधारिभिर्दक्षाध्वरमृगध्वंसनाय दाक्षायणीदयितेन सृष्टानिव[5] तपोवनक्षोभकोलाहलैः शा*[6]पायुधैः श्वापदव्यापादन-प्रहितांशानिव मूर्तिमतः समसुप्तिसमयवित्रोटित- नक्षत्रघटित-वराटमालिका *[7]भरणानमेयसारान् सारमेयान् कैश्चिदानयद्भिः प्रालोभकहरिण परिगतानि प्रलयावलुण्टितचन्द्रमण्डलानीव दन्तपाण्डराणि शार्दूलशकटयन्त्राणि कैश्चिदाकर्षयद्भिः कल्पान्त-विपन्नदिङ्नागसदन्तसिरातन्तुसान्द्रब्धानीव वीतंस *[8]वलयानि कैश्चिदादधानैर्विविधमृगविहग-निनादानुवादननिपुणैर्मृगयुगणैरनु-गम्यमानो युगविगमविरतसुरपतिन*[9] तपदिग्धचन्द्रकसहस्र

[1] * GL
[2] * GL
[3] * GL
[4] * GL
[5] GL सुष्टानी
[6] * GL
[7] * GL
[8] * GL
[9] * GL

[1]दन्तुरेण मयूरपिञ्छातपत्रेण सञ्छादि[2] तातपः परिगृहीतकिसलयांशुकया परिगृहीतकुसुमा*[3]

भरणया वनश्रियेव मूर्तिमत्या पार्वत्या [4]परिष्क्रियमाण-पार्श्वदेशो महेशः सवनमृगचर्मनिर्मिते पादुके समाक्रम्य चरणाभ्या *[5]मेवव्याजविहितमृगव्याभिरतिरटव्यामगात् ॥

**यद्वैभवेन यमिनां मनसाप्यदृश्यं**
**शम्भो स्वयं प्रचलितं चरणारविन्दम्।**

**तस्मै किरी *[6]टिनि स्वयम् स्पृहयांबभूव**
**रागानु षङ्गरहितोऽपि गणो गणानाम्[7] ॥१७॥**

अथ तदानीमौपाधिकशबरानुयायिनीनां प्रथमवाहिनीना *[8]महीयानुदीयाय मृगयाविहारकोलाहलः॥

**रोहित्पङ्क्तेरेष[9] रोमन्थ फेनो**
**दानार्द्रेयं दन्तिसंचारवीथी[10]।**

**वाराहीयं वर्तनी[1] चार्द्रकीर्णा[2]**
**पिच्छैः केकीलास्यवासस्थलीयम् ॥१८॥**

---

[1] GL दुन्तरेण

[2] GL सञ्जादित

[3] * GL

[4] GL परिक्रिय

[5] * GL

[6] * GL

[7] GL गुणानाम्

[8] * GL

[9] GL रोहीत्पकते

[10] GL वीधि 

**शल्यः सोऽयं मुच्यतां विश्वकद्रुः**
**सन्नह्यध्वं सम्मुखीनो मृगेन्द्रः[3]।**
**रूध्वं रूध्वं रोहि[4]*नमग्रे वधध्वं**
**धध्वं दक्षिणेर्माणमैणम् ध्वानम् ॥१९ ॥**

**एतद्धूरपदं[5] जवाधिकतया वातप्रमीवल्गितं**
**संशीर्णैः शललैरितो विषमिता शल्याङ्ग भङ्ग*[6]स्थली।**
**पर्यस्तद्विपकुम्भमौक्तिकमिदं पारिन्द्रविक्रीडितं**
**मासृण्यं गमितोऽयमेणरूधिरैर्मार्गोऽपि मार्गादनः ॥२०॥**

इत्येवमादि सर्वतः*[7]प्रसर्पता प्रतिरवमुखरीकृतशिखरीदरी-मुखेन तदाखेटकोलाहलेन-निकुञ्जकुहरनिर्गच्छदच्छभल्लमुल्ल-सितशल्यवर्गमुद्विग्न*[8]खर्गिबृन्दमुद्दान्तव*[9]तपमीवातमातङ्कदीहा-मृगव्यूहं धैर्यक्षयतरलहर्यक्षंदुर्गमाचलार्गमाग्रमृगणव्यग्रव्याभ्रमणं[10] यूयं पृथग्भूतपोतकान्वीक्षण-व्याक्षेपसरणीपरिभ्रष्टहरिणी-कुलमाकूलसालावृकमनाकलितविषयसरगवयं पलायमानलुलाय विपुलगव*[11]लकोटिता[12]डनत्रुटितविशङकटकटकशिलाकूटं सक्तवालव्यव्यजनमोचनारम्भ-विलम्बमानचमरीकदम्बं

---

[1] GL वर्वती
[2] GL चागपङ्का
[3] GL मेगेन्द्रः
[4] * GL
[5] GL, My2 पथं
[6] * GL
[7] * GL
[8] * GL
[9] * GL
[10] GL व्याघ्रणं
[11] * GL
[12] GL कटिता

ससंरम्भजग्ममाणस्तम्बोरमस्तोमं सरभसशरभसङ्घजङ्घा-जवलम्बितोत्तुङ्गशृङ्गोत्सङ्गमशङ्कितोपनतभयातङ्कविहितसह-जविरोधसमस्तसत्वसामानाधिकरण्यं तदरण्यमभूत् ॥

अतिक्रम्य किंचिदन्तरमनुभूतं [1]चिरान्मनोहरोद्देशान्निर्दिशन्नेव देवीं जगाद[2] जनयिता जगताम्। देवि ! दृष्टिरितो दीयताम्। अस्मध्यानास्पदं कामभस्ममोहितरोहितम्। उत्तरेणादेमिदं यत्र चीर्णं [3]त्वया तपः ।

**[4]नीवारगर्भकबलग्रहनिर्निरोधं**
**पूर्वं त्वया यदिह पोषितमेणयूथम्।**

**सप्रत्यभिज्ञमधुना तव दर्शनेन**
**पार्श्वं समेति परिपृच्छसि मानमेतत् ॥२१ ॥**

तदिदमा*[5]वयोः प्रथमसौहार्दसिध्दतीर्थं जाह्नवीतीरमाधवीमण्टपम्।

**मयि [6]सम्मुखतामवापितायाः**
**चतुरैस्तत्प्रथमं सखीवचोभिः ।**

**तरलाक्षि तव स्मरामि राग**
**[7]त्रपयोरत्र तटस्थतां भजन्त्याः ॥२२॥**

---

[1] GL चारान्मनो

[2] GL जगाम

[3] GL चीर्णञ्चया

[4] GL नीवारमर्थ

[5] * GL

[6] GL सम्मुखी

[7] GL त्रययोरत्र

**पशुपतिरिति शंसन्नेव भक्तैकभव्यो**
**वसतिमनतिदूराद्वासवेराससाद ॥**

**शमसुखसमवेतस्वैरसञ्चारिसत्वां**
**फलकुसुमसमृध्दैः पादपैरातिथेयीम् ॥२३॥**

***[1]पोत्रवकृष्टिपुरुहूतसूतप्रशस्ति**
**शाल्युद्भवोचितहिमाचलवप्रभागम्॥**

**मन्दस्मिताहुतपुरः स पुराणवीरो**
**वीक्षाम्बभूव विजयाभि*[2]मुखरराहम् ॥२४॥**

**तटनिहितबलो वियत्तटिन्याः**
**परिमितभव्यपरिच्छदानुयातः।**

**निभृतपदनिवेशमेष धन्वी**
**तरुगहनान्तरितस्त*[3]मन्वयासीत् ॥२५॥**

क्रमेण च [4]भूदारवेषपुरुषोत्तमगवेषि[5]तानवेक्षितपदेन भूतनाथेनाप्यनुगम्यमानतया प्रकटित- पौरुषोत्कर्ष*[6]दकौटिकोऽयं किटिरैन्द्र सूनवीमवततार नयनपदवीम्॥

**उत्क्षिप्तमादिकिटिनेत्यतितिक्षयेव**
**[1]दंष्ट्राञ्चलेन दलयन् वलयन्धरण्याः*[2]।**

---

[1] * GL
[2] * GL, My2
[3] * GL
[4] GL हृदार
[5] GL गवेष्टित
[6] * GL

**वन्यामलब्धवसतेरिह मत्सरस्य**
**सर्वाभिसार इव शान्ति जयप्रवृत्तः ॥२५॥**

**अत्यद्भुतोऽयमसुरो नियतं**
**जिघांसुप्रव्याहतोयदिमद्य*[3]धावतीति।**

**चित्ते समाहित जवादसुभृज्जिघांसां**
**धीरः स धन्वनि शरं च दृशं च लक्ष्ये ॥२६ ॥**

मुष्ट्याकृष्टाहिमौर्वीमुखकुहरपरिष्ठ्यूतनिश्वास*[4]धूमज्वाला जालाभियोगज्वरित इव शरो धूर्जटेर्वज्र- क[5]*ल्पः कूटक्रोडाङ्गशैलं कुवलयवनवत्सम्प्रविश्याप्रसक्तो*[6]भूयस्तज्जीवमृष्टाशनसहित इवाशेत भूगर्भतल्पे॥ तत्क्षणमेव ताक्ष्र्यादपि पक्षारवभयंकरश्चेतसोऽपि शीघ्रगामी नभस्वतो*[7] पितरस्वोपाण्डवीयसायको लघुविवेश[8] वज्रसूची वेधितान्तरान्तन्तुरिव महेन्द्रनीलमणि मखान्तकविशिखनिर्मितमर्मावदारां प्रविश्य च पुनः परोच्छेकजुगुप्सयेवानास्वादितशोणितरस एव तरसा निस्ससार॥

---

[1] GL दंष्द याञ्चलेना
[2] * GL
[3] * GL
[4] * GL
[5] * GL
[6] * GL
[7] * GL
[8] GL लघुविशेष

**प्रखरखुराभिघातपरिपातितपार्श्व*[1]तरु**
**कपिलविघूर्णितन्नामनिमीलितनेत्रपुरम् ।**
**कपटकिटिः कृधाकटुरवन् धरणौ**
**विलुठन्नसुरहितोऽभवत्सुरहिताय तदस्महतः[2] ॥२७॥**

*[3]अनन्तरमतिदारुणभूदारदारणकृतकर्माणं [4]*बाणमादरादाददान एव शबराधिराजशासन- हारिणा केनचिद्वनेचरेण सरभसमुपस*[5]र्पता प्रगल्भतरमभ्यष्धीयत सव्यसाची॥

**अप्राकृतेयमाकृतिरतिशयिताशेषमुनिजनं तेजः।**
**महिमापि धीरमधुरो महति कुलेसम्भवं ब्रुवते*[6] ॥२८॥**

भद्रमुख! भवता कथमस्मत्प्रभोरस्त्रापहरणमतापसानुरूपम- पौरुषोचितमनात्मीनम् इदमाचरितम्॥

***[7]सहजो वीरधर्मोऽपि शान्तं नटयता रसम्।**
**भवता भरतन्यायः प्रायेण परिशीलितः ॥२९॥**

अमृष्य सायकस्येव किमन्येषामपि तवायुधानां सङ्ग्रहः*[8] व्याहारशुध्दिः।

---

[1] * GL
[2] GL तदास्रतः
[3] * GL
[4] * GL
[5] * GL
[6] * GL
[7] * GL
[8] * GL

**याचस्व सैनिकपतिं यदि सायकेऽस्मिन्**
**आस्थाकियानयममुष्य वदान्यतायाः।**

**यद्वा स्वयं हरसि नो सहते स राजा**
**यदसाधि*[1] तद्विमृश याचितकेऽपि लोघ्रे ॥३०॥**

**विशिखेन हिरण्मयेन किं वा**
**रजतस्वर्णगिरीश्वरस्य राज्ञः।**

**प्रणिपातफलैकवैभवो*[2] सौ**
**सहते किं तु न शासनातिवृत्तिम् ॥३१॥**

**आदृत्य किंचिदपि पुष्पफलोपहारं**
**आरण्यमर्पयति यः शबरेश्वराय।**

**दातव्यमेतदिति हन्तन *[3]वेत्ति तस्मै**
**चर्माम्बरोऽपि स विभुः सुलभप्रसादः ॥३२॥**

अयं तावदवतरति न कस्य वा श्रवणपथमस्मत्प्रभोरनुभावः। यदस्य *[4]राजशेखरस्य नखमुखोत्कृत्तशार्दूलकृत्यैव केवलमुत्तरीयकृत्यनिर्वर्तनम्, अनायासदलितदन्तावल-कुम्भमुक्तामणिभिरेव सहचरीविलासहारावलीगुम्भनं किं पुनरालोकनहसितमात्रपर्याप्तमरातिपुरविध्वंसनम्*[5]। सोऽयमिदानी-

[1] * GL
[2] * GL
[3] * GL
[4] * GL
[5] * GL

मविनीतजनशासिता वरूथिनीसहस्रपरिगतः प्रियया सह समया हिमालयाटवीं [1]मृगयाविहारमाचरति॥

**[2]*अथ प्रगल्भामवलेपगर्भा**
**[3]मलक्षयन्नाटविकस्य वाचम्[4]।**

**अन्तर्हसन्नाश्रितधैर्यसेतुः[5]**
**[6]आसीत्प्रसङ्ख्यानपरः किरीटी॥३३॥**

**अमुष्य पश्यन्नविभिन्नसत्वताम्[7]**
**विसिष्मिये[8] व्याधपतेर्वचोहरः।**

**प्रतीपवाचं वितथीचिकीर्षतां**
**भवत्युपेक्षा प्रथमं हि साधनम् ॥३४॥**

**उन्नतां भुवमुपेयिवानसा*[9]**
**वाजुहाव बलमात्मसंज्ञया।**

**तत्क्षणेन चलतिस्म तन्मरु**
**त्कम्पितं किल तमालकाननम् ॥३५ ॥**

---

[1] GL हिमालाटवीं
[2] * GL
[3] GL मलक्ष्य
[4] GL वाचः
[5] GL हेतुः
[6] GL आसात्
[7] *GL, My2
[8] GL वसिष्ठये
[9] * GL

[1]अनन्तममन्दकलितकोलाहलयायुगा*[2]न्तसिन्धुवीचीव विष्वग्द्रीची[3]। रे ! रे ! केतवतापसपरिगृहीतकार्मुकवर्मादि-महार्हपरिबर्होऽसि[4]। कुतस्त्यमिवेदं [5]लोप्तमिति चोरं कारमाक्रोशन्ती किराताधिराजके[6] शवेशोचितानीति शिवार्चनापचितानि कृतमाला-कुसुमानि समाहर्तुं प्रवर्तमाना शबरसेनासुत्रामतनयमभिदुद्राव ॥

**अथ शबरचमूमधिक्षिपन्तीं**
**पशुसमजं किल पाण्डवो मनस्वी ।**

**अबहुमतमनोकहैकशाखा**
**प्रहरण एव पलाययाञ्चकार ॥३६ ॥**

पालायमाना च सा परस्परविलोकितसस्मितानना[7] प्रथमसंविदमनुस्मरन्ती कस्यचिदबाला-शोकतरोरधः प्रदेशवर्तिनीप्रच्छायशीतले स्फटिकशिलातलेमृगया विहारविश्रान्तस्य खण्डपरशोरभज-दुपकण्ठभुवम्। अथ नानापथप्राप्तैरप्रमेयैरिवागमैः आनीकैरन्वितः शम्भुराजगाम तदन्तिकम्॥ तत्क्षणमविरलकाहलीनिनादकृतालोकशब्दमुध्दाममतरुनिध्वानकृताभिनन्दनमुच्छृङ्खलशङ्खस्वनसम्भृतकरावलम्बमुजृम्भमाणवेणुरणितोपश्लोकितमामन्दयपणवरवामन्त्रितमाध्मातशिखरिकन्दरप्रति

[1] GL अनन्तरं
[2] * GL
[3] GL विष्वग्धी
[4] GL परिच्छेदर्हसि
[5] * GL
[6] GL केशनिवेशिता
[7] GL सस्मित[illegible] 

रवाभ्युद्यातममन्दमन्दरक्षुब्धमहाम्भोराशिगम्भीरभैरवं भेरीरवमाकर्ण्य दूरादेव किरातराजदर्शनोत्कण्ठी बभूव गाण्डीवधन्वा॥

अनन्तरमखिलदिगन्तरव्यापिनमखिलवाहिनीव्यूहं जाह्नवीप्रवाहमिवापह्नुवानमनिर्देश्यविषयं कमपि तेजोराशिं ददर्श। तदनु महस्तेजोमण्डलात् क्षीरसागरकल्लोलादुदीयमानमोषधीशमिव प्रियदर्शनं वनदुर्गपरिग्रहदुर्ललि तबालपल्लवसमरोल्लास वर्मितस्येव महार्हपादुकासनाथस्य पादयुगलस्य प्रगल्भम रैर्विन्यासविलासैराखेटविहारखेटविहारसन्नाहचलितामरण्यानीं यथास्थानमास्थापयन्तमनपदीनसा- स्नावलम्बित वलम्बिजाम्बूनदशृङ्खलाकलापदम*[1] भो दीर्घकालसंचितेन नदीयसुकृतसम्भारेण निबध्य नीयमानमिव चमर्यव सलीलविचलितप्रवालव्यजनया[2]मेघलेखयेव शिखण्डिबर्हावचूड- विचित्रकोदण्डभृता समानवेषया देव्या साकमाकृत नर्मस्मितैरमृतर सैरिव किंचिदातपक्लान्तां कर्णपूरशिरीषमञ्जरी सिञ्चन्तमाभुग्नचुलिकाबन्धगाढोत्पीडितसुकुमार सोमरेखोद्वान्तसुधास्यन्दधारानु- कारिण्या मनागिव लम्बमानया मालतीशेखरस्रजा विराजमानं वातहरिणयूथस्येव वल्गनोदग्रस्य कस्यचिन्ना*[3]सिरिभटवर्गस्य कपटयुध्दाभियोगमन्तरान्तरा कटाक्षयन्तं तृणीकृतभुवनावष्टम्भया दृष्ट्या प्रतीच्छन्त पदे पदे वनदेवता प्रणामाञ्जलीन्द्रवयन्तमिव दाक्षिण्येन स्नपयन्तमिव सौभाग्यवशेन ग्र[4]सन्तमिव गाम्भीर्येण प्राकृतजनोदितां[1]

[1] * My2

[2] GL मेखल

[3] * GL

[4] GL ग्रहन्त

किरातभूमिकामपि महानुभावतामिव नयन्तमविनयबहुलामपि मृगयां विनयमिव शिक्षयन्तमभिमुखमापतन्तमभूतपूर्वशबरसेनापतिं विस्मयानन्दमन्थरेण[2] विस्मृतानिमेषेण चक्षुषा सुचिरमद्राक्षीत्॥ पश्यतः पुनरमुष्य चासीन्मनसि चिन्ता। किमेतदस्य किरातभावमास्थितस्यापि सेनापतेरनितरसाधारणमावेदयति महिमानमत्यमरमतिराजं तेजः। यदेतदालोकमात्रेण बलादाह्लादयते समाधिशिथिलं हृदयमाप्यायते चान्तरात्मा। अत्र पुनरान्तरं निमित्तमन्तरेण कमपि न पश्यामि बाह्योपाधिम्। अहो पुनरस्या वनेचर्याः पतिपरिचर्यातात्पर्यम् ॥

**क्लान्ता स्वयमपि शाखां**
**किसलयितामस्य तालवृन्तयते।**

**छत्रयति पिच्छगुच्छं**
**चापशिखा चूडामनुसरन्त्येषा ॥३७ ॥**

इत्यादि चिन्तयन्तमेनमासीदन्नेव मधुकैटभमेदः परिणतिरियमिति जुगुप्सयेव नखकिरण-पुण्योदकैरभीक्ष्णमभ्युक्षितायां क्षितावेकचरणाङ्गुष्ठावष्ठम्भेनतिष्ठन्तमवितपञ्चमाक्षरीजपगणना[3] वर्तितरूद्राक्षवलयमनवेक्षिततदपदानसंख्यावसानमिव लक्ष्यमाणमासन्नगाण्डीवामर्दभयं कपर्दमपहाय समाश्रितया त्रि[4]स्रोतसेव भस्मत्रिपुण्ड्ररेखया पवित्रीकृतगात्रमापाद्य

---

[1] GL जनोचितां

[2] GL मण्डरेण

[3] GL जगना

[4] GL यति 

शबरसेनात्ययभयेन सरभसमागत्य तरङ्गितापाङ्गैः सारङ्गैररण्यसहवासपरिचय[1], स्नेहजनितकरतलाधिरोहदोहलैः [2]सरूपतामेव महेश्वरं [3]वृणीष्वेतीवसञ्चोद्यमानमतिधीरतावधीरितप्रतिभटसम्पातं प्रवातस्तिमितमिव रत्नदीपं प्रतिपच्चन्द्रमिव-पावनरमणीयमननीयन्तपस्साधनकृशं कृशेन्दुशेखरः प्रसादनिष्यन्दिन्या प्रगल्भगम्भीरारम्भयादृष्ट्या-वर्तमिवानुयुञ्जानः सद्भुत्यकुतूहलेन स्वीकुर्वन्निव निर्वर्णयामास॥

**अग्रे [4]सरोपहितपल्लवभङ्गकीर्णे**
**मार्गे गभीरमधुरं पदमादधानः।**

**स्कन्धे निवेश्य करटीवकरं प्रियायाः**
**देवस्तदन्तिकमुपेत्य जगाद धीरम् ॥३८ ॥**

अये ! तापसक्षत्रिय ! किमयं तपस्यालसावलेपो भुजबलावष्टम्भदर्पो वा ? अध्यवसितोऽसि यदस्माकमस्त्रापहरणे। अथ वा कति कति न सन्ति अस्माकं सांयुगीनानि शास्त्राणि।

**कियानयं तेषु शरस्तथापि**
**नाहं तितिक्षे नयलङ्घनं ते।**

**अणुर्महानित्यत्यभिमानभाजां**
**व्यतिक्रमे नास्ति विचारकक्ष्या ॥३९ ॥**

---

[1] GL पथिय

[2] GL सरल

[3] GL प्रणीष्वे

[4] GL सरोत्पत्ति 

किञ्च । महाहवकृतमुखेन मद्विशिखेन विघसीकृतस्य पशोरुज्जासयितुं व्यवसितवतो लज्जापि लज्जितैव पराङ्मुखी भवति।

**कृत्वैवमपराध[1] मे किं दधासि मुनिव्रतम्[2]।**
**मूर्खोऽपि मुखरः साम्ना जेतुं शक्यो न वाग्यतः ॥४० ॥**

अविनीत यदि पुनरिदानीमेव नलोज्रमर्पयसि, अनुपदमितरेऽपि त्वदपहृतमहेषुगवेषिण इव दुर्दान्तकृतान्तदंष्ट्रांकुरभयङ्कराः पुरा परापतन्ति शराः॥ किं तु मा कृथा मयि प्राकृतोऽयमित्यसम्भावनाम्। मैत्रीं यद्यनुरुध्यसे मयि पुनर्दत्वा शरं प्राथ्र्यताम् बध्दो वीर्यमदेन चेत्परिकरो युध्दोत्सवाय त्वरया। सम्प्रत्येव मृगीकदम्बमटवीसंवासमित्रं चिरदाभाषस्व विलोकयाश्रमतरुनद्यैव संवर्धितान् ॥ प्रगल्भनयपौरुषावष्टम्भगम्भीरामिति किराताधिराजगिरमाकर्ण्य किंचिदारज्यमानलोचनः प्रत्यवोचत मध्यमः पाण्डवानाम्॥

**आदातुमस्त्रं पुनरस्मदीयं**
**किं नस्तपस्याबलपौरुषाभ्याम् ।**

**प्रगल्भमेतत्भुजकाण्ड एष**
**गृहीतुमस्त्रं तव हस्ततोऽपि ॥४१॥**

**वचस्यसारे तव धृष्टतामिमां**
**वनेचरस्येति वयं सहामहे।**

[1] GL मपरान्धर्मे

[2] GL मखव्रतम्

**अयं प्रसादः पुनराशुशिक्षणे**
**तितिक्षते तीक्ष्णतरो न गाण्डिवः ॥४२॥**

**प्रागेव ते बाणगतेः पपात**
**शरारुघाताय शरोमदीयः।**

**प्रायः परास्रोपहते शरव्ये पतन्ति**
**शस्राणि न पाण्डवानाम् ॥४३॥**

**शरं विवादास्पदमन्तरेण**
**शस्त्रं च यद्वाञ्छसि तद्वदामि।**

**वनीपकानां हि मनीषितार्थ**
**पूत्यैर्तनुं बिभ्रति [1]पूरुवंश्याः ॥४४॥**

सर्वथा साधुजनबीभत्सितं भवताचरितम्। तथाहि वीतंसादिग्रहणमेव संसारभरणम्। विगहगमृतास्वरानुकरणमेव [2]वैदुष्यम्। विश्वकद्रव एव विस्रम्भसुहृदो गुहृयका एव साहाय्यकारिणः। पशुचर्मेवाच्छादनमाच्छोटन[3]पाटवामेव पौरुषमामिषमेव[4] जीवनम् ॥

**ईदृशेन त्वया मैत्री द्वेषो वा लाघवाय मे।**
**[5]अध्यारूढं ततः सोढुमप्यसभ्यमतः परम् ॥४५॥**

किं च -

---

[1] GL पूर्ववंश्याः

[2] GL वैकलष्यम्

[3] GL मास्फोट

[4] GL जीवनमेव

[5] GL अन्त्यारूढं 

**अस्यामेव सुशीलायामनुकम्पा रुणध्दि माम्।**
**त्वदतिक्रमसंरब्धं वेलेव मकराकरम्॥४६ ॥**

**महति स्वयमभियोगो**
**मदो*[1]ध्दतस्याल्पमेधसः श्रान्त्यै।**

**गण्डोपलाभिघातो गन्ध-**
**गजस्येव दन्तभङ्गाय ॥४७ ॥**

यः पुनरविनीतनिग्रहैकफलेग्राहिषु ग्रहान*[2]स्मानपि तपस्विन इति व्यवस्यति पराभवितुम्। स खलु न बिभेति च नरकेसरिसटाकलापहठाकर्षणात्। न वेत्रस्यति वैवस्वत *[3]दंष्ट्राकुरप्रेङ्खोल्लुलनात्। नोद्विजते च करालकालकूटकबलीकरणात्।

**आरेचिताक्षमथनवी*[4]क्ष्य मुखं पुरारे**
**तरोवत*[5] स्तम्बकमार्चनिकं गृहीत्वा।**

**देवी बबन्ध सुरसिन्धुदरेन्दुमौलेः**
**मौलौ मनस्यपि महेन्द्रसुतस्यरोषम्*[6] ॥४८॥**

अ*[7]नन्तरमतिविकटभृकुटीविटङ्कितवदनसौधकृतावताराया रोषाधिदेवतायालोहितायतलोचनमरीचिचयेन रचयन्निवरक्तोत्पलोपहारं रे ! रे ! किरातापशद भवत्सहचारिण्या-

---

[1] * GL
[2] * GL
[3] * GL
[4] * GL, My2
[5] * GL, My2
[6] * GL
[7] * My2

स्त्रीचापलविहितं महेश्वरद्रोहमनुमन्तारं *[1]भवन्तमधुनैव मन्दारकुसुमालहारिणं करिष्यामीति सरभसगृहीतकोदण्डहस्त-लसत्कोदण्ड इव *[2]पन्नगः सन्ननाह सव्यसाची॥

**बध्नन् कृष्णाजिनपरिकरं गाढगाढञ्जटानां**
**[3]जूटग्रन्थौ दृढनियमिते वेष्टयन्नक्षसूत्रम् ।**
***[4]प्रस्रीकुर्वन् प्रबलचरणास्कन्दनैरद्रिराजं**
**चक्रे जिष्णुः समरसचिवं चापमारोपितज्यम् ॥४९ ॥**

**अंशेन केनचिदसा निजमौलिदाम्नः[5]**
**संभावयन् सहचरीकबरीकलापम्।**
**पुष्यन्विशिष्य पुरुहूतसुतस्य रोषं**
**तस्थौ सहेलचलितैकशरस्तदानीम्*[6] ॥५० ॥**

***[7]जिष्णुं धनुष्मान् प्रति राजहंस**
**निराकरिष्णुं निकरं शराणाम्।**
**अमर्षघर्मानुमितं ववर्ष**
**जहर्ष तेनैव स नीलकण्ठः ॥५॥**

**शम्भोरग्रे तास्तस्य चापमुक्तास्तु सायकाः।**
**विधेरमुक्तकौटिल्यात् सिध्यै केवलमार्जवम् ॥१२॥**

---

[1] * GL
[2] * GL
[3] GL जटग्रन्थौ
[4] * GL
[5] * GL
[6] * GL
[7] * GL, My2

तदनु तपनीयनिकषरेखानुकारिणी विहायसी विद्युदालोकमयं लोकान्तरमिव सृजन्ती समततः सम्भ्रान्तसिध्द जनविनियुक्तान्तर्धानवैदुषीविशेषाविद्रुताविद्याधरगणा भिनिन्द्य-मानबाणानिवारणविटा विद्याधिगमाप्रतायमानपक्ष पवमानविपर्यस्तविमानमण्डला घण्टासरणिरजनि गाण्डीवनिर्गतानां मार्गणानाम्।

**विशिखाः कुसुमानि तस्य मुद्रा**
**स्थितिभेदस्तुतिकर्मवीरवादः।**

**भगवत्यनवद्यभक्तियोगाद**
**पचारोऽप्युपचार एव जज्ञे[1] ॥३॥**

**अत्रान्तरे पुनरनूमितपत्रशोभं**
**क्रीडारविन्दमिव केसरितं प्रभाभिः ।**

**[2]आघूर्णयन् प्रभुरसंभ्रममेकबाणं**
**पौरन्दरेः प्रतिजघान शिलीमुखालिम्[3] ॥५४॥**

**विशिखेन विघूर्णितेन शम्भोः**
**गणितं वाङ्मुखरेण घटनेषु।**

**अभियाति *[4]जयव्रतस्थमासी**
**दवकीर्णो कृतमर्जुनास्त्रजातम्॥५५॥**

---

[1] GL जज्वे

[2] GL आचूर्णयन्

[3] GL शिलोशिखालिम्

[4] * GL

ततः शाम्बरीशबरशस्त्रव्यतिकरण प्रतिक्षिप्यमाणा बाणाः परिग्रहेणेव पौरन्दरेरसन्दर्शि [1]तापराङ्गा एव सरभसमपासरन्॥

**कोटिं परां समधिरोप्य गुणं सलीलं**
**आवर्ज्य धन्वकरुणानिधिरामृशन्ती।**

**[2]साभ्यर्थनेव मृदुसायकमोचनाय**
**स्मेरा ददौ सहचरस्य करे किराती ॥५६ ॥**

अथ सहचरीहस्ताद्गृह्णन्नृसिंहसरटच्छटाचमरजयुगं चापं ज्याबन्धबन्धुमामृशन्।

**अविकृतमुखाम्भोजामाननसौष्ठवशालिनीम्।**
**त्रिपुरविजयीं वीरोधिरोध्दतामधि*[3] तस्थितिम् ॥५७ ॥**

क्रमेण मार्ताण्डमण्डलादिव खण्डपरशोः कुण्डलीकृतात्कोदण्डादखण्डितप्रसरं निस्सरन्ती बाणपङ्क्तिर्मयूखरेखेव-तिरश्चकार दिगन्धंकरिणीं धनञ्जयशस्राकारतिरस्करणीम् ॥

**प्रार्थोन्मुक्तशरोत्करप्रतिविधौ तत्राभिधावद्गण**
**क्रोधावेगिनि वारणे गुहमुखस्रस्तालकोत्सारणे।**

**देवीदर्शितवीटिकाभ्युपगमे किंचिद्गलच्चूलिका**
**दामग्रन्थिनिबन्धने च युगपत्पाणिर्विभोः प्रावृतत् ॥५८ ॥**

---

[1] GL सन्दर्भित

[2] GL साभ्यर्यणव

[3] * GL

**अलब्धविषया रवेरपि यथा भवन्त्यंशवो**
**विशन्त्यपदिशं यथा विहितदिग्विमोहाः खगाः।**

**यथा न विबुधाञ्झिता भुवि पतन्ति दिव्यत्रजः**
**तथाजनि तयोः शरव्यतिकरावरुध्दं नभः ॥५॥**

**बाणान् मर्मस्पृशो[1] मोक्तुं प्रायसत्पाण्डवो यथा।**
**तथा[2] मृदु शरं क्षेपे देवोऽपि करुणानिधिः॥**

**सव्यापसव्यकृतसायकमोक्षमेनं**
**विव्याधयन्नहृदयेर्विशिखैर्महेशः।**

**अन्तःस्थितस्य पुनरात्मन [3]एव रक्षा**
**काङ्क्षैव तत्र खलु कारणतां प्रपेदे॥६१॥**

अनेन पुनरप्रतीकारदारुणेषु दारुकावनतपोधनशापेष्विव वितथीकृतेषु विशिखसम्भारेषु विस्मेरमना[4] महेन्द्रनन्दनश्चिन्तयामास॥

**बाणान्वमतीव गुणः पाणि- र्धनुषा सह प्ररूढ इव।**
**आलीढसौष्ठवाञ्चितमालि- खितमिवास्य पुनरवस्थानम् ॥ ६२ ॥**

**समयोन्मेषत्हेषाप्रथितरथकन्द्या प्रथिरवन्**
**न पश्याम्यश्वीयन्नभिदुरकटां च द्विपघटाम् ।**

---

[1] GL स्पृजो

[2] GL तया

[3] GL पुनरायन

[4] GL महा 

भुजक्रीडासाक्ष्यं कलयति बलं केवलमिदं
समग्र्यां सङ्ग्राममश्रियमयमथापि ग्रथयति ॥६३॥

तूणाद्बाणोध्दरणं गुण- सन्धानं च कर्मणं प्रयोगञ्च ।
समकालीनमिवैतत्सकलं पश्यामि शबरबाणानाम् ॥६४ ॥

पाणी किं सृजतः प्रसौति किमु वा [1]तूणीमुखं कार्मुकं
प्रस्तौति स्विदजस्रमस्य किमुत ज्यावल्लरी कर्षति।

वीराशंसनदेवता व्यवहिता निर्माय किं मायया
नाराचस्रजमुज्झतीति न परिच्छेतुं प्रगल्भामहे ॥६५॥

अनेहसः कुटिलमहो[2] विचेष्टितं
वनेचरो वलयितनर्मकार्मुकः।

सलीलमाक्षिपति शरैरघातुकैः
शिलामुखावलिमपि गाण्डिवोज्झिताम् ॥६६ ॥

द्रोणाद्यानखिलानभैष्माहि[3] यदा[4] सारैरुपासिष्महि
द्रुह्याद्भिर्जलदाय वान्हिमतिथिं यैश्च व्यजेष्मह्यरीन् ।

सङ्ग्रामेष्वपराञ्चितान्यपि यशस्सन्ध्य्रञ्चि[5] शस्त्राणि नो
विष्वग्ध्रञ्चि वनेचरेऽत्र कुसुमवक्लैब्यं कथं बिभ्रति ॥

---

[1] GL तृणी

[2] GL कुटिलमोह

[3] GL भैषति

[4] GL यथा

[5] GL सिध्यन्ति

इत्येवं चिन्तयत्येव तस्मिन् केवलमस्मत्परिगृह एव निवातकवचकृत्यं निर्वत्तयतीति व्यञ्जयन्निव वञ्चनाकिरातः शितमुखेन शिलीमुखेन तनुच्छेदं चिच्छेद॥

**भोगीन्द्र इव निर्मुक्तो मेघमुक्त इवांशुमान्**
**विकोश इव निस्त्तृंशो[1] दुर्दशः स तदा वभौ॥।**

**गाण्डीवमौर्वी विशिखान् प्रसूते**
**गर्भे तदीये कति सन्ति चान्ये॥**

**इत्येतदालोकनकौतुकात्कि-**
**मेनां लुनाति स्म पिनाकबाणः ॥६९॥**

**कृधा दिदृक्षन्निव[2] तत्क्षणे जग**
**ध्दनञ्जयो धन्वभृतामुदेजयः*[3] ।**

**प्रचक्रमे भग्नगुणेन धन्वना**
**प्रहर्तुमर्धेन्दुपरिकृतं शिरः ॥७०॥**

चिरपरिचयस्निग्धशिञ्जिनी विरहसज्वरासह इव गाण्डीवः सोमशेखरस्य सुरनदीस्रोतोजडीकृतमाटीकतकोटीरपदम्॥

**गाण्डीवाटनि ताडिते भगवतश्चूडापदे पार्वती**
**सद्यः स्नेहसमाकुला करतलावष्टब्धफाला बभौ ।**

**भक्तत्राणपरायणेन मनसा नेत्रादसोढस्मरात**
**शङ्किन्येव शिखोद्गतिं सरभसामासेध्दुमुद्योगिनी ॥७१॥**

---

[1] GL निस्त्रंशो

[2] GL द्रिक्षन्निव

[3] * GL, My2

अर्जुनस्य हरमौलिताडने चापमुज्वलितचूडचामरम्।
आदिहंसमदसीयदर्शन- प्रीतिलोलमिव बिभ्रदाबभौ ॥ ७२ ॥

ग्राण्वा प्रहर्तु गिरिजापदार्हे चूडापदे कर्तुमुपानहं च।
माहेश्वराणां स हि मार्गदर्शी महेश्वरातिक्रमकर्मणाभूत् ॥ ७३ ॥

अस्मेरकैरवमशान्तनिशान्धकार
माह्लादशून्यमभविष्यदिदं हि विश्वम्।

ऐशं जटागहनमप्यविलोकनीय
मस्यापतिष्यदधिचन्द्रकलं धनुश्चेत् ॥ ७४ ॥

असोढातिक्रमं जिष्णोरभीष्टफलदो विभुः।
फलितस्य तरोरेव भविता दण्डताडनम् ॥ ७५॥

आलम्ब्य गाण्डिवमथ प्रतिसार्यमाणो
देवेन दर्शितपुरोऽवयवोऽपसर्पन्।

जग्राह खड्गमपि जिष्णुरमुं क्षणेन
तार्क्ष्यः फणीन्द्रमिव तद्विशिखो बिभेदे ॥७६॥

धूलीह*[1] स्तयतोः प्रहारविवरान्वेषाणि निमेषाक्षयो
रालक्ष्य क्वचिदन्यतः*[2] कलयतोरङ्गेषु मुष्ट्याहतिम् ।

संश्लेषानुपदं निपत्य लुठतोरुत्पत्य सद्यः कृत
क्रिडामण्डलचारयोः प्रववृते चित्रं नियुध्दं तयोः ॥ ७७॥

[1] * GL

[2] GL क्वचिदन्वित

**वृषभकपिध्वजव्यतिकरश्लथसन्धिनतं प्रचल**
**त्कुलाद्रिकीलतयालु भुवो वलयम्।**

**वलयितवामनादिवलनाकृतिमग्नफणा**
**गणपरिणाहमावहत कुण्डलिनामधिभूः ॥ ७८ ॥**

**क्षणमन्तरितो यः कपि-ध्वजेनाध्यरोपि हृदयमिति।**
**स च तेनान्तरितः सायु-ज्यंनीत इत्यतर्किगणैः ॥७९॥**

**गौरीकुचद्वयविमर्दसहे महेश**
**बाहवान्तरे बलवदाहितमुष्टिघातः[1]।**

***[2]सुत्रामसूनुरजनि स्वयमेव ताम्यन्**
**गोत्राचले परिणमन्निव कुञ्जरेन्द्रः ॥८०॥**

**प्रथमं वराहतिषु बध्दमुष्टिता**
**बिभराम्बभूव भगवान्महेश्वरः।**

**अथ पाकशासनिरपि व्यधात्तथा**
**कतमः कृतानुकरणे व्यतिक्रमः ॥८१॥**

**चिरं नियुध्य मुग्धेन्दुशेखरो विवशीकृतम्।**
**चिक्षेप कन्तुकक्षेपं पादाग्रेणोर्ध्वमर्जुनम् ॥८२ ॥**

क्षिप्यमाणे च तस्मिन्नतिस्नेहरभसम्भ्रान्तहृदया दयासारतरङ्गितैरपाङ्गैः प्रागेव पतनादमृतमयमिवापरं प्रवर्तयन्ती

[1] GL मुष्ठिबन्धः
[2] * My2

पद्माकरं करस्रंसि किसलयव्यजनान्तिक मुपालब्धशिवानुध्यायिनी भवानी तस्थौ।

**चन्द्रचूडचरणाग्रलीलया-गाण्डिवी गगनमुत्पतन्बभौ।**
**दुर्जयः शबर एष कोन्विति प्रष्टुकाम इव पाकशासनम् ॥८३॥**

अथ कथंचित्प्रत्युपजातचेतनो धनञ्जयः कस्याश्चन सरस्याः कल्लोलसुखशीतलं सैकतमपरमिवमा[1]* तुक्ङ्पर्यङ्कमधिशयानमावर्तित वर्तिकाजलार्द्राभिर्धात्री-भिरिवाब्जिनीभिरुपवीज्यमान- मपश्यदात्मानम्॥

**उच्छवासयन्नरुचदुर्मिकरावमर्शा**
**दायासितं विजयमम्बुजमालहारी।**

**कासार एव तनयप्रणयावतीर्णः**
**चक्षुस्सहस्र*[2] च जयचारुरिवामरेन्द्रः ॥ ८४ ॥**

**पश्यन्महेशयजनं प्रतिकारमार्तेः**
**क्षात्राभिमानकलिताधिकभक्तिरेषः ।**

**पद्मैः पयोभिरपि पत्रपुटोपनीतैः**
**आराध्दुमारभत सैकतमत्र लिङ्गम् ॥८५॥**

अथ समाहितमनाः प्राणायामपावितात्मा भवितजीव-परैकतानुभूतपरमानन्दो निस्तन्द्रोपहि-तमन्त्रतन्त्रोपचार-श्चराचरहृदयाधिष्ठातारमतीतषडाधारमध्यात्मदृष्टिगोचरम्, अगोचरं

---

[1] * GL
[2] * GL

प्रकृतेरुपनिषदां निधिमुपाधिनिर्मुक्तं सितचन्द्रखण्ड-मण्डितमखण्डपरिपूर्णानुभावमपर्णागृहमेधिनं विधिवदारराध ॥

**पर्याप्तदेवयजनः प्रत्याशंसितपौरुषः।**
**आश्वास्तशबराग्रण्यमग्रगण्यः स मानिनाम् ॥ ८६ ॥**

अवसरे च तस्मिन्नश्रूयत श्रुतिवचनमिवशब्दान्तर-परिवर्तिनीयमावर्तितमहेश्वरापदानमभिज्ञा-नकाहलीरणितम्। ततः शब्दानुसारेण किमेतदिति कौतुकोक्तानितलोचने सव्यसाचिनि पवनकम्पित वृषाङ्कितपताकादम्भेन समरसंरम्भनिवारणसंज्ञामिव कलयन्ती प्रत्यदृश्यत पारमेश्वरी केतुयष्टिः ॥ क्रमेण पुनरन्तरितवेद्यान्तरपरमानन्दसम्पन्निधानमनिदानगिरामप्यपादानं स्वरूपमादाय निषादाधिपः[1] स एव निजविग्रहावसरेऽप्य-सकलससक्तपरिहितकिसलयभ्रमादनकलं करतलावमृष्ट-काञ्चीकलापरत्नप्रभया भगवत्या पार्वत्या सनाथीकृतसव्यभागः प्रकाशितदिव्याकारगणपरिवारस्वीकृत-यथोचितपरिचरणाधिकारः सैकतलिङ्गाचनकुसुमैः साकं शेखरपदे लक्ष्यमाणया गाण्डीवताडनव्रणरेखया त्रैगुण्यातिवर्तिनोऽपि मे भक्तजने सर्व सहता शिरोलिपिरिति दर्शयन्निव देवो दयानिधिः सन्निदधे।

**तस्मै दर्शयितुं निजं शबरता त्यागेन रूपं दया**
**वैयग्र्यादिव विस्मृतं मृगशिशुं व्याघ्राजिनं चोद्वहन् ।**

**स्कन्धे केवलमर्पयन् करमनारुह्यौपवाह्यं वृषम् ।**
**देवस्तत्र किरीटिना विषयतां धन्येन निन्ये दृशोः ॥८७ ॥**

---

[1] * GL निष्ठाधिपः 

**पद्मच्छत्रेण लक्ष्मीः परिचरतु गिरां चाधिकर्त्री विपञ्चा**
**कालिन्दी जह्नुकन्ये सपदिकलयतां वीजनं चामराभ्याम् ।**

**वेद्या वेदानधीतां विरचयतु हरिश्चाटुकारानुकारं**
**दिव्यानित्यादिदेश त्रिपुरविजयिनो दण्डनाथोऽथनन्दी ॥८८॥**

ततः प्रमोदाश्रुधारापूर्वमेव चन्द्रशेखरचरणारविन्दसाकूत[1] चक्षुरिन्द्रियो माहेन्द्रिः[2] परमानन्दपरवशेन चेतसा मूर्छित इव मुहूर्तमात्मानमपि विसस्मार किमुत कृत्यान्तरम् ।प्रतिबुध्य च किमप्यनुशशास पञ्चेन्द्रियम् ।

**यद्रष्टुं पुनरिन्द्रियाणि भवतां रोधापराधः कृतः**
**तज्ज्योतिर्वरदं तपः फलवशात्साक्षादिदं लक्ष्यते।**

**अत्र स्पर्शनदर्शनादिविषयास्वादामृतं सम्प्रति**
**स्वैरं भुंक्ष्व विमुञ्चत क्षणमिमामानन्दनिष्यन्दताम् ॥८९॥**

तत्क्षणमानन्दरसास्वादनमीलिते चक्षुषी तादृशो देवदर्शनमहाभ्युदयस्य स्वप्नोपलम्भशङ्कया-पुनरुन्मीलयितुम-संविदानमष्टाङ्गस्पृष्टभूमिमेनमुत्थाप्य हस्तभ्यामाश्लिष्य परामृशन् प्रहरणव्रणजर्झरेषु स्वङ्गेषु भगवाननुग्रहस्नेहपरिवाहिन्या दृशानिशामयन्नेव कुमारनिर्विशेषमुपलालयामास। प्रतिक्षणविहित-प्रणामपतनोत्पतनोत्पतनेन परमानन्दमहोदन्वति परिचिन्वतेव मज्जनोन्मज्जनशतानि भक्तिपरवशेन पाण्डवेन गद्गदपदाभिर्वाग्भिरवाङ्मनसगोचरमखि-लचराचरभुवनगुरुमपि

---

[1] GL,My2 साकत

[2] GL, My2 माहेन्द्रिय:

नयनगोचरीकर्तुमारेभे। अद्य भगवन् मम न विद्यते वेद्यान्तरम्। न सम्पद्यते किमपि दृश्यान्तरम्। नावशिष्यते चाभिलष्यान्तरम्। सम्प्रत्येव समासादितमनावृत्तिभयं पदम्। आस्वादितमनितर-स्वादापेक्षममृतम्। अवेक्षितं गाधमपर्यन्तस्य परमानन्दसागरस्य ॥

**वेदागमैरपि वितीर्णकरावलम्बा**
**गुम्भाश्चतुर्मुखगिरां गुणसिन्धुपारम्।**

**नाद्यापि यान्ति तव नाथकृतो *[1]वत्समे**
**किं वा न वाचयति दुर्लभवस्तुलाभः ॥१०॥**

**भक्तिं स्थिरां वितर मे भगवन् प्रसीद**
**सर्वाणि साधयति सैव समीहितानि।**

**एकं महारजतमेव तनुं विधत्ते**
**केयूरकुण्डलकिरीटमुखं विवर्तम् ॥९१ ॥**

अत्र भगवति भक्त्यभिनिवेशगद्गदाभणितिरव-सरस्वतीप्रसादनिवन्धनमवनतिरेव समुन्नति निदानं ध्यानमीलनमेव संविदुन्मीलनकार्मणं संयम एव मोक्षसाधनम्॥

**गौरीशृङ्गारभङ्ग्या गुहललितवचोलालनैर्वादयालो**
**कालक्षेपक्षणस्ते कलशजलनिधौ मध्यमाने यदिस्यात् ।**

**ज्वालाजिह्वालहालाहलदहनहठाक्रान्तिशून्ये वितन्यात्**
**को वा देवासुरौघे पुनरुदितसुधाभागलाभे विवादः॥९२॥**

[1] * My2

**अतिरसयितुंराभीराभीरगवमदः कथं**
**मुहुरिदमुपस्रष्टुं स्रष्टुः कमण्डलुवारिकिम् ।**

**मरुदधिभुवामेतद्धोक्तं मखांशहवींषि किम्**
**शिवशिव तदाहर्तुं शक्तस्त्वमेव हलाहलम् ॥९३ ॥**

शङ्कर तव हसिताङ्कुरमासन्नवर्तिभ्यां भवान्यां नर्मोपन्यासकं सङ्गृहीतसाङ्ग्रामिकसाधनेषु विबुधजनेषु परिहसनमाच्छुरितकमसुरपुरेषु परमासीत्॥

**उन्नम्यैककुचाद्रिभारनमितं भागं कथंचिन्निजं**
**संयम्यश्वनेत्रं प्रमृज्य निटिल स्वैरं प्रकोष्ठेन च।**

**मानिन्यां वपुरेकताजुषि धनुार्ग्राहश्रमापहनव**
**क्लेशिन्यामुदितैः स्मितैः कृतपुरध्वांसाय तस्मै नमः॥१४॥**

**चापबिले किल मौर्वी**
**स्वापसुखं भजति तत्र बाणोऽपि।**

**ईषदिति यस्य हसितैः प्लोष-**
**महासत पुरा ननु नौमि त्वाम् ॥९५ ॥**

**पादेनाम्बुजकोमलेन कठिनं कालस्य वक्षस्तटं**
**प्रक्षुण्णं मृदुना स्मितेन परुषास्तिस्रः पुरोध्वंसिताः।**

**प्लुप्यपुष्पशराकृतिस्तु ललिता भीमेन पारकार्चिषा**
**शम्भो लोकविलक्षणं जयति ते शस्त्रं चरित्रं यथा ॥१६॥**

**पुंसां त्वदुपरि क्षिप्तपुष्पाणां वरदोह्यसि।**
**कामेन किं कृतं यद्वा सिध्यै श्रध्वान्वितो विधिः॥**

देव देव जम्भमथनभुजस्तम्भनं जलन्धरनिर्गमन-निर्गन्धनमन्धकनिषूदनमन्तविक्षोदनं दक्षाध्वरध्वंसनमपरमपितेव लघुतरमनितरविबुधसाधारणमवधारणीयमपदानाम्॥

**यज्ज्योतिरन्तर्यमिनो यजन्तः**
**प्रध्वंसितप्राक्तनजन्मबीजाः।**

**भजन्त्यनावृत्तिभयं प्रभुत्वं**
**तत्वायतस्मै विनतिः परस्मै ॥२८॥**

**विष्णोर्विश्वमयस्य भावि हृदयं सूक्ष्मं तदन्ते बिलं**
**मध्ये तस्य शिखी महानिह तटिल्लेखेव तन्वी शिखा।**

**तत्रात्मा परमो व्यवस्थित इति श्रुत्या त्वमेवोच्यसे**
**कोऽन्यः क्रीडति कृष्णपिङ्गलविरूपाक्षप्रथालक्षणैः ॥९९॥**

**पर्वानुपर्वगतकारणपञ्चकानि**
**कक्ष्यान्तराणि कतिचित् परिलङ्घय धन्याः।**

**पश्यस्यानाहतपदाश्रयिणं कथंचि**
**दानन्दलक्षणमनन्तमतीन्द्रियं त्वाम् ॥१०० ॥**

किं परमनुरुध्य वा सर्वजीवदयालुतामवगत्य वा देवाश्रयतामनुस्मृत्य वा कुमारस्य चापलवमज्ञानकृतमिति विज्ञाय वा देवदेव मदीयमविनयं तितिक्षेधाः।

अथवा -

**पूर्णस्य प्रतिमार्चनान्तरपरिच्छेदापराधास्पदं**

**ध्यानं विस्मरणागसे च भवतश्चित्तैकबद्धस्थिते ।**

**स्तोत्रं को विषयी क्रियावमतये। वागृकृत्यतीतस्य ते**

**तत्किं यत्र निरागसो वयममी स्वामिन्प्रसीदाधूना ॥१०॥**

**अस्मासु यद्यदहितं विहितं च यत्नैः**

**जानासि तत्तदखिलं जगदन्तरात्मन् ।**

**लक्ष्मीं लभेमहि यथा रणमूर्ध्नि जैत्रीं**

**अस्मान् कृपालय तथा परिपालयेथाः ॥१०२ ॥**

**दानं धर्ममिति स्वयं विमृशता गौरीमुखेन स्मितं**

**देवैरुच्छवसितं चिरं निजनिजस्थानव्ययाशङ्किभिः ।**

**पश्यद्भिर्जलतां गणैरपि मिथो भूयस्वमालोकितं**

**लक्ष्मीं काटलाघुं जिघुक्षति तपोरत्नेन भीमानुजे ॥१०३॥**

**तस्मै प्रसादसुमुखः स पिनाकपाणिः**

**अस्त्रं च तत् पाशुपतं दिदेश।**

**दिव्यायुधानि विभुचित्तविदो यथा स्वं**

**दिक्पालकाश्च ददति स्म धनञ्जयाय ॥१०४ ॥**

**पशुपतिरिति श्रुत्वाशिष्यद्वयेन मद्यविभोः**

**कृतिमभिनवां गीतां द्वैपायनस्य तपोनिधेः।**

**सदसि मुदितः सम्भाव्यैनं विनोदकालान्तरैः**

**अरमत चिरादात्मारम्यामहीपकन्यया ॥**

*[1]इति गुरुस्वयंभूनाथरामकृतौ किरातार्जुनीये शङ्करानन्दनाम्नि चम्पूकाव्ये पञ्चमोच्छवासः।

॥ शुभमस्तु ॥

[1] * My2

## उपसंहारः

कीर्त्यते विपश्चिद्भिः वाङ्मयम् अक्षरब्रह्मस्वरूपमिति। निखिलेस्मिन् वाङ्मये काव्यं कान्तासम्मितां भजते। तच्च काव्यं, पद्यं, गद्यं, चम्पूरिति त्रिधा भिद्यते। तत्र चम्पूकाव्यानां प्राशस्त्यं नितरां ज्याय्यः। तादृशेषु अन्यतमं गुरुस्वयम्भूनाथरामविरचितशङ्करानन्दचम्पूः इति नाम्ना प्रसिद्धं किरातार्जुनीयचम्पूकाव्यम्। मातृकारूपेण लभ्यमाणं काव्यमिदं मैसूर्, मद्रास् नगराभ्यां समानीय लिपिपरिवर्त्य पाठसमीक्षणम् अकारिषाताम्। अस्य काव्यस्योपरि भारविकृत किरातार्जुनीयस्य, कालिदासकृत कुमारसम्भवस्य च प्रभावः दृश्यते।